**राजा**–(सहर्षम्) कथमतीत्य हरिणं हरयो वर्तन्ते। तथा हि–

**यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां**
**यदर्धे विच्छिन्नं भवति कृतसंधानमिव तत्।**
**प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-**
**र्न मे दूरे किं चित्क्षणमपि न पार्श्वे रथजवात्।। 1–9।।**

(नेपथ्ये) भो भो राजन्, आश्रममृगोऽयं, न हन्तव्यो न हन्तव्यः।

**सूतः**–(आकर्ण्यावलोक्य च) आयुष्मन्, अस्य खलु ते बाणपातपथवर्तिनः कृष्णसारस्यान्तरायौ तपस्विनौ संवृत्तौ।

**राजा**–(ससंभ्रमम्) तेन हि निगृह्यन्तामभीशवः।

**सूतः**–यथाज्ञापयत्यायुष्मान्। (इति तथा करोति) (ततः प्रविशति सशिष्यो वैखानसः)

**तापसः**–(हस्तमुद्यम्य) भो भो राजन्, आश्रममृगः खल्वयम्।

**न खलु न खलु बाणः सन्निपात्योऽय-**
**मस्मिन्मृदुनि मृगशरीरे पुष्पराशाविवाग्निः।**
**क्व बत हरिणकानां जीवितं चातिलोलं क्व**
**च निशितनिपाताः सारपुङ्खाः शरास्ते।। 1–10।।**

---

शङ्क्यते। तेन वा कविरेवम् अवादीदिति केचित्। कीदृशाः कम्पशून्यचामराग्रभागाः, तथा उन्नोनीत उचोलितकर्णाः तरन्ति उत्पल्वन्ते।। नु वितर्के, उभयोः समानाधिकरणाद्। वितर्क इति वेगातिशयोक्तिः। किरणप्रग्रहौ रश्मी इत्यमरः।

अतिशयोक्तिरलङ्कारः। हरयो घोटकाः। त्वक्-केशवाल-लोमानि सुवर्णाभानि यस्य तु। हरिर्नामतो वाजी पीतकौशेय समन्वित[18] इत्यश्वभेद इत्यन्ये।

यदा०।। (1-9) मम पार्श्वे दूरे वा क्षणमपि न किञ्चिद् विद्यत इति शेषः। तदेवाह दर्शनविषये यद्दूरदोषात् सूक्ष्मं प्रतिभातमित्यर्थः। एवमग्रेऽपि। तत्कालमेव तद्वस्तु विपुलत्वं याति। आलोके दर्शने सतीति शङ्करः। अर्द्धे विच्छिन्नं द्विधाकृतम्। कृतसन्धानमेकीभूतमिव भवति। स्वभावतो यदुक्तं तदपि समलेखम् अवक्रमिव नयनयोरश्व-वेगादिति च सम्बन्धः। सर्वत्र प्रकृत्येत्यवक्रं नयनयोरिति सम्बन्धः इति शङ्करः। अतिशयोक्तिरलङ्कारः। न हन्तव्य इति। द्विरुक्तिः संभ्रमात्। बाणपातस्य पथि वर्तमानस्य। शङ्करस्तु बाणपात-समवर्तिनः सायकपात-तुल्यदेशस्थितस्य, यद्वा बाणपातसमवर्ती, समः झटिति लक्ष्यहरत्वादिति पाठान्तरमाह। अन्तरायौ विघ्नभूतौ। सम्भ्रमस्त्रासः। सम्भ्रमं त्रयमिच्छन्ति– "भयम् उद्वेगमादरमिति कोषः। उद्यम्य उत्तोल्य।।

न खलु न खलु०।। (1-10) शब्दो निषेधे। द्विरुक्तिरत्यन्तनिषेधाय। मृदुनि कोमले। बत खेदे। हरिणकानां क्षुद्रहरिणानाम्। लोलं चञ्चलम्। निशित-निपातास्तीक्ष्णप्रहाराः। निपातयतीति निपातः।

---

18. संनिभ इति शङ्करेण पठ्यते। (शङ्कर-नरहरिटीकयोः सम्पादनं मिथिलाविद्यापीठेन प्रकाशितं (1957) वर्तते।)

**तदाशु कृतसन्धानं प्रतिसंहर सायकम्।**
**आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि।। 1–11।।**

**राजा**–(सप्रणामम्) एष प्रतिसंहृतः। (इति यथोक्तं करोति।)

**तापसः**–(सहर्षम्) सदृशम् एवैतत्पुरुवंशप्रभवस्य नरेन्द्रप्रदीपस्य भवतः। सर्वथोभयचक्रवर्तिनं पुत्रमाप्नुहि।

**राजा**–(सप्रणामम्) प्रतिगृहीतं ब्राह्मणवचः।

**तापसौ**–राजन्, समिदाहरणाय प्रस्थितावावाम्। एष चास्मद्गुरोः कण्वस्य साधिदैवत इव शकुन्तलयानुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यकार्यातिपातः प्रविश्यात्र गृह्यतामतिथिसत्कारः। अपि च–

**धर्म्यास्तपोवनानां प्रतिहतविघ्नाः क्रियाः समभिवीक्ष्य।**
**ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति।। 1–12।।**

**राजा**–अथ सन्निहितस्तत्र कुलपतिः।

**तापसौ**–इदानीमेव दुहितरमतिथिसत्कारायादिश्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः।

**राजा**–यद्येवं तामेव द्रक्ष्यामि। सैव विदितभक्तिर्मां महर्षये निवेदयिष्यति।

**तापसौ**–एवं साधयावस्तावत्। (इति सशिष्यो वैखानसो निष्क्रान्तः)

**राजा**–सूत, प्रेरयाश्वान्। पुण्याश्रमदर्शनेनात्मानं पुनीमहे तावत्।

**सूतः**–यथाज्ञापयत्यायुष्मान्। (इति भूयो रथवेगं निरूपयति)

**राजा**–(समन्तादवलोक्य) अकथितोऽपि ज्ञायत एव यथायमाभोगस्तपोवनस्य।

**सूतः**–कथमिव।

**राजा**–किं न पश्यसि। इह हि–

---

शल्यमित्यन्यः। सारो दृढः। पूङ्खः शराधो भागो येषाम्। अत्यन्तासम्भवेऽर्थे क्व–द्वयन्तु प्रयुज्यते। अहो बतानुकम्पायां खेदे सम्बोधनेऽपि चेति मेदिनी। अत्र पुष्पराशावित्यनेनात्यन्तासामञ्जस्यमुक्तम्। ततस्तदेवोपपादयति क्व–बतेति इति पौनरुक्त्या समाधानमाह शङ्करः। गुरवस्तु धन्विनां हि द्वयं पौरुषं दुर्भेदस्य भेदनं, दुर्म्मरस्य झटिति मरणं च। तदत्र पुष्पेत्यनेन दुर्भेदत्वं निरस्य, क्व–बतेत्यनेन दुर्म्मरत्वं निरस्तमिति। न कदाचिद् विप्रतिपत्तिः, तेनैतन्मृगमारणेन भवतो न किमपि पौरुषमिति भावः इति सुष्ठु समादधिरे। यत्तु विस्मय–विषादादिषु पौनरुक्त्यं न दोषायेति–तत् कुव्याख्यानम्। तदाशु। (1–11)। आशु शीघ्रं प्रतिसंहरेत्यन्वयः। आर्तत्राणाय दुःखितरक्षणाय अनागसि निरपराधे प्रतिसंहारः संहार एव। तदुक्तम्–धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते। तमेव विशिनष्ट्यन्य उपसर्ग–गतिस्त्रिधेति।। सहर्षमिति। वाचा मात्रेणैवाभिमतसम्पादनात् सर्वथा निर्विघ्नम्। चक्रवर्तिनं

**नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः**
**प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।**
**विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-**
**स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दलेखाङ्किताः।। 1–13।।**

अपि च–

**कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला**
**भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन**
**एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां**
**नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति।। 1–14।।**

**सूतः**–सर्वम् उपपन्नम्।

---

सार्वभौमम्। गृहीतमिति, एवं भवती(त्वि)त्यर्थः। प्रस्थितौ गन्तुमुद्यतौ। अयञ्चोल्लेखनामा नाट्यालङ्कारः। यदुक्तं कार्यदर्शनमुल्लेख इति। साधिदैवत इत्यनेन शकुन्तलायाः सौन्दर्यातिशय उक्तः। मालिनी नदीभेदः। तस्यास्तीरमनु समीपे। अतिपातः प्रत्यूहः।

धर्म्या० ।। (1-12) धर्मादनपेताः। धर्म्मे साधेवारा,(साधिकाराः?) क्रिया यज्ञादिकाः। किणः संघर्षजो[19] व्रणः, अङ्कश्चिह्नं यस्य।। अथ प्रश्ने। कुलपतिर्बहूनां तापसानां मुख्यः। इदानीमिवेत्यनेन कुलपतिश्चिरात् प्रत्यागमिष्यतीति गम्यम्। अतिथीत्यनेन सुलभमेव तत्कन्यादर्शनमिति च। तेन च नृपस्याश्रमप्रवेशनौपयिकं रूपमुक्तम्। दैवमिति विवाहप्रतिबन्धकं दूरदृष्टम्। विदितभक्तिरिति क्रियाविशेषणेन समासः। एवम् अङ्गीकारे, साधयामो गहारः। प्रायेण न्यन्तकः(?) साधिर्गमे प्रस्थाने प्रयुज्यत इति भरतः। तावच्छब्दः परिच्छेदे। यावत्-तावत् परिच्छेदे इति शाश्वतः। आभोगो विस्तारः। कथमिवेति वाक्यालङ्कारे। परिचायकं रूपमुपदर्शयन्नाह–"इह ही"ति, हिरत्र हेतूपदेशे। प्रश्ने हेतूपदेशे हि इति मेदिनी।

नीवाराः० ।। (1-13) नीवारा उडीति ख्याता धान्यभेदा दृश्यन्त इत्यन्वयः। शुकानां कोटरेषु काष्ठविवरेषु येऽर्भकाः शावाः(वकाः)। क्वचित् प्रदेशे स्निग्धा अतिचिक्कणाश्चेद् अत इङ्गुदी-फलभिदः प्रस्तराः सूच्यन्ते बुध्यन्ते दृश्यन्ते इत्यन्ये। इङ्गुदी तापसतरुरित्यमरः। एवकारोऽन्य-योगव्यवच्छेदे। अभिन्नगतयोऽविकृतगतयः। बन्धनेति बन्धनाग्रात् क्षरन्तीति लेखाभिश्चिह्निताः। स्निग्धो वत्सलचिक्कणाविति शाश्वतः। अन्यदस्याह।।

कुल्या० ।। (1-14) कुल्या कृत्रिमनदी, प्रसृतानि विस्तार{य}शीलानि दन्तिचपलानि। पवनेति च पाठः। किसलयेन रुचो येषां, तेषां वृक्षाणां रागो लोहित्यम्। हूतं घृतादिषु धूमानामूर्द्ध्वगमनेन भिन्नोऽन्यथा भूत इति शङ्करः। अन्ये तु "कृदभिहितो[20] भावो द्रव्यवत् प्रकाशत" इति रूक् सहित किसलयानामित्यर्थः। यथा मालत्यां०। यद्वा "नेन्दुकलोदयाद् अवचितै"रित्यादीत्याहुः। नव्यास्तु रागोऽनुरागः। तथा च किसलय-रुग् विषये योऽनुरागः सोऽपगत इत्यर्थः। धूमैः किसलयस्य मालिन्यात्

---

19. सहर्षयो इति 4117 इत्यत्र पठ्यते।
20. विहितो इति 4117 इत्यत्र पठ्यते।

**राजा**–(स्तोकमन्तरं गत्वा) सूत, आश्रमोपरोधो मा भूत्तदिहैव रथं स्थापय यावदवतरामि।

**सूतः**–धृताः प्रग्रहाः। अवतरत्वायुष्यमान्।

**राजा**–(अवतीर्यात्मानमवलोक्य च) सूत, विनीतवेषप्रवेश्यानि तपोवनानि। तदिदं तावद्गृह्यतामाभरणं धनुश्च। (इति सूतस्यार्पयति) यावदाश्रमवासिनः प्रत्यवेक्ष्य निवर्तिष्ये तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः।

**सूतः**–यथाज्ञापयसि (इति निष्क्रान्तः)

**राजा**–(परिक्रम्यावलोक्य च) इदमाश्रमपदम्, यावत्प्रविशामि। (प्रविष्टकेन निमित्तं सूचयित्वा) अये–

**शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य।**
**अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र।। 1–15।।**

(नेपथ्ये)

इदो इदो पियसहीओ। (इतः इतः प्रिय सख्यौ।)

**राजा**–(कर्णं दत्त्वा) अये, दक्षिणेन वृक्षवाटिकायामालाप इव श्रूयते। भवतु अवगच्छामि। (परिक्रम्यावलोक्य च) अये, एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते। अहो, चित्रमासां दर्शनम्।

---

तद्विषये च। नानामनुरागो नास्तीति भाव इत्याहुः। रागोऽनुरागे मात्सर्ये क्लेशादौ लोहितादिष्विति कोषः। अर्वाक् शब्दोऽव्ययोऽग्रतो वाची। अग्रत एते दृश्यमाना हरिणशावका विश्वासात् त्यक्तभया मन्दं मन्दं चरन्ति, धावन्ति, भक्षयन्ति तृणानीत्यर्थादित्यन्ये। छिन्नेति। अर्थाद् ऋषिभिः अयमपि तपोवनाभोगोऽस्वतन्त्रो हेतुः। श्लोकद्वये(1–13,14) प्यनुमानाख्योऽ–लङ्कारः। तदुक्तं–लिङ्गाद् यल्लिङ्गिनो ज्ञानम् अनुमानं तदिष्यत इति। उपरोधो बाधा मा भूत्, न भवतु।

"माङि लुङ्" (पा.सू. 3–3–175) इति कालसामान्ये लुङ्। हयरश्मौ तुलासूत्रे प्रग्रहः सद्भिरिष्यत इति शाश्वतः। विनीत। तथा च मनुः–"विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित्"। नीतिनामा नाट्यालङ्कारोऽयम्।

यदुक्तम्–नीतिः शास्त्रानुवर्त{मा}नमिति। निष्क्रान्तो रङ्गभूमेरित्यर्थः। प्रविष्टकं प्रवेशोचित–गतिभेदः। निमित्तं कुशलम्। अये सम्बोधने। अये कोपे सम्भ्रमे च सम्बुद्धौ स्मरणेऽपि चेति विश्वः।

शान्तम्। (1–15) शान्तं विकारशून्यम् रागिजनशून्यं वा। पदं स्थानम्। चकारः पुनरर्थे, बाहु–र्ममेत्यर्थात् फलं वराङ्गनालाभः। स इह निर्विकाराश्रमे कुतोऽस्ति {क्ष} वर्तते। यद्वा वर्तमानसामीप्ये भविष्यति लट्, । यद्वाक्षेपेऽवष्टम्भे इति शङ्करः। अवष्टम्भे तथाक्षेपे पक्षान्तरेऽथवा स्मृतमिति कोषः। भवितव्यानां विधिविलसितानां द्वाराण्यागमनपथाः। सव्येतरभुजस्पन्दो वरस्त्रीलाभसूचक इत्यद्भुतसारः[21]। आक्षेपालङ्कारः। अनुमानालङ्कार इति शङ्करः। नेपथ्य इति वाक्यस्यार्थतया यत्र

---

21. इत्यद्भुतसागरः इति 4117 इत्यत्र पठ्यते। मिथिलातः प्रकाशितायां शङ्करटीकायां "अद्भुतसारः" इति प्राप्यते।

**शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।**
**दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः।। 1–16।।**

यावदेताश्छायामाश्रितः प्रतिपालयामि। (इति विलोकयन् स्थितः)

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला)

**एका**–हला सउन्तले, तत्तो वि तादकण्णस्स अस्समरुक्खआ पिअ त्ति तक्केमि जेण णोमालिआ कुसुमपरिपेलवा वि तुमं एदेसुं आलवालपूरणेसुं णिउत्ता। (सखि शकुन्तले, त्वत्तः अपि तातकण्वस्याश्रमवृक्षकाः अतिप्रियाः इति तर्कयामि। येन नवमालिका कुसुमपरिपेलवा अपि त्वम् एतेषु आलवालपूरणेषु नियुक्ता।)

**शकुन्तला**–हला,अणुसूए, ण केवलं तादस्स णिओओ ममावि सहोअरसिणेहो एदेसुं। (सखि अनुसूये, न केवलं तातस्य नियोगः, ममापि सहोदरस्नेहः एतेषु।)

(इति वृक्षसेचनं नाटयति)

**प्रियंवदा**–सहि सउन्तले, उदअं लम्भिदा एदे गिम्हआलकुसुमदाइणो अस्समरुक्खआ। इदाणिं अदिक्कन्तकुसुमसमए वि रुक्खए सिञ्चम्ह। तेण हि अणहिसंधिगरुओ धम्मो भविस्सदि। (सखि शकुन्तले, उदकम् लम्भिताः एते ग्रीष्मकालकुसुमदायिनः आश्रमवृक्षकाः इदानीम् अतिक्रान्तकुसुमसमयान् अपि वृक्षकान् सिञ्चामः। तेन हि अनभिसन्धिगुरुः धर्मः भविष्यति।)

**शकुन्तला**–सहि पिअंवदे, रमणीअं मन्तेसि। (इति भूयो वृक्षसेचनं नाटयति।) (सखि प्रियंवदे, रमणीयं मन्त्रयसे।)

**राजा**–(आत्मगतम्) कथमियं सा कण्वदुहिता शकुन्तला। (सविस्मयम्) अहो असाधुदर्शी तत्रभवान् कण्वो य इमां वल्कलधारणे नियुङ्क्ते।

---

पात्रं नैव प्रशस्यते। नेपथ्य इति वाकाशे प्रयोज्यम्। तत्र नाटक इति भरतः इति शङ्करः। इत इतः प्रियसख्यौ। द्विवचनस्य बहुवचनमिति प्राकृतसूत्राद् बहुवचनम्। दक्षिणेन वृक्षवाटिकायां दक्षिणभागे इत्यर्थः। अत्र लक्षणया वृक्षवाटिकाशब्द उपवनमात्रे। संलापो भाषणं मिथः इत्यमरः। अयेति कोमलानुमन्त्र....(?) अहो सुकन्यका एता सेचनघटैर्नवीनवृक्षेभ्यो जलं दातुमत्रागच्छन्ति। अहो चित्रम् आसां दर्शनम्, एतेन रत्युत्पत्तिरुक्ता।

शुद्धान्त० (1-16)।। शुद्धान्तेऽन्तःपुरम् अवरोधस्य राजस्त्रिया दुर्लभं दर्शनमेव ज्ञातव्यम्। अन्तः शब्दोऽव्ययम्। स्त्रीणां तु प्राकृतमिष्टत्वाच्च, यदाह भरतः संस्कृतात् प्राकृतं श्रेष्ठम् इति। भाषा चेयं सौरसेनी नायिकादीनां प्रशस्ता। यदाह भरतः नायिकानां सखीनाञ्च सौरसेनी प्रयुज्यते इति। सखि शकुन्तले, त्वत्तोऽपि तातकण्वस्याश्रमवृक्षका अतिप्रिया इति तर्कयामि। कः स्वार्थे। स्वार्थे को वेति प्राकृतसूत्रम्। येन नवमालिका कुसुमपरिपेलवापि त्वमेतेषु आलवालपूरणेषु नियुक्ता। श्रेष्ठनायिकेयं, यदाह भरतः। दिव्या च भूपपत्नी च कुलस्त्री गणिका तथा। चतस्रो नायिकाः श्रेष्ठा वेश्याद्या मध्यमाधमाः। सखि, न केवलं तातस्य नियोगो ममापि सहोदरस्नेह एतेषु। अनुसूया-प्रियंवदेति

**इदं किलाव्याजमनोहरं वपुस्तपःक्लमं साधयितुं य इच्छति।**
**ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति।। 1–17।।**

भवतु, पादपान्तरितो विश्वस्तां तावदेनां पश्यामि। (इत्यपवार्य स्थितः)

**शकुन्तला**–हला, अणुसूए, अदिपिणद्धेण एदिणा वक्कलेण पिअंवदाए दढं पीडिद म्हि। ता सिढिलेहि दाव णं। (अनुसूया शिथिलयति), (सखि अनुसूए, अति पिनद्धेनैतेन वल्कलेन प्रियंवदया दृढं पीडितास्मि। तत् शिथिलय तावदेनम्।)

**प्रियंवदा**–(विहस्य)–एत्थ दाव पओहरवित्थारइत्तअं अत्तणो जोव्वणारम्भं उवालहसु। (अत्र तावत् पयोधरविस्तारयितृकमात्मनो यौवनमुपालभस्व।)

**राजा**–सम्यगियमाह–

**इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे**
**स्तनयुगपरिणाहाच्छादिना वल्कलेन।**
**वपुरभिनवमस्याः पुष्यति स्वां न शोभां**
**कुसुममिव पिनद्धं पाण्डुपत्रोदरेण।। 1–18।।**

---

सख्यौ, एते अनुनायिके च। यदाह भरतः–सखी प्रव्रजिता दासी प्रेष्या धात्रेयिका तथा। अन्याश्च शिल्पकारिण्यो विज्ञेया ह्यनुनायिका इति। सखि शकुन्तले, उदक लम्भिता एते ग्रीष्मकालकुसुमदायिन, आश्रमवृक्षान् सिञ्चामः। शनय(शमन) इति शमः। स्थाने श्र आदेशः। तेन हि अनभिसन्धिगुरुधर्म्मो भविष्यति। सखि, रमणीयं मन्त्रयसि। आत्मगतमिति तत् प्रीत्यै यद्वस्तु तदिह स्वगतं मतमिति भरतः। कथमिति हर्षे। कथं हर्षे च गर्हायामिति मेदिनी। सा शकुन्तलेति या तपस्विना कथितेति भावः। अहो विषादे। विषादे विस्मयेऽप्यहो इति कोषः। तत्रभवान् श्लाघ्यः। श्लाघ्ये तत्रभवान् मुख्या इति भरतः। असाधुदर्शी अनभिज्ञः। तदेव प्रकटयन्नाह। इदं। (1–17) किल निश्चये। अव्याजेति। स्वभावरम्यम् इदं शरीरम्। तपः तपोयोग्यं साधयितुं कर्तुं य इच्छतीत्यन्वयः। ध्रुवं निश्चितं शमीदृढतर लताभेदः। एतस्यातिमधुरस्य शरीरस्य तपाक्षमत्वकरणं नीलोत्पलपत्रधारया शमीलता–कर्त्तनं यथा न भवति, तथैतदपि। वपुः क्षमं तपः साधयितुं भविष्यतीति पाठान्तरश्चेत्याह। अभिप्रायाख्यं नाट्यलक्षणमिति। तदुक्तं अभिप्रायस्तु सामर्थ्याद् भूतार्थस्य कल्पनेति। सखि अनुसूये, अतिपिनद्धेनौमुना वल्कलेन प्रियम्वदया[22] दृढं पीडितास्मि, तस्माच्छिथिलय तावद् इदम्। इदं बन्धनमित्यर्थः। विहस्येति। विहसितमाह भरतः। आकुञ्चिताक्षि गन्तञ्च निःश्वनं मधुरं तथा। कालागतं सानुरागं नृणां विहसितं भवेदिति।। सखि, अत्रतावत् पयोधरभार–विस्तारयुक्तमात्मनो यौवनारम्भम् यौवनोद्यममुपालम्भस्व। निन्द हेतुकशब्दः प्राकृते मतुबर्थः। शङ्करस्तु पयोधरभार–विस्तारयितार–बन्धकम् इत्याह। इदं०।। (1–18)। परिणाहो विशालता। अभिनवं तारुण्यमारुढम्। स्वामात्मीयां शोभां कान्तिम् अभिख्यामिति पाठेऽपि शोभैवार्थः। पिनद्धमालिङ्गितम्। पाण्डु धूषरं यत् पत्रं तदन्यन्तरेण। अतस्तु नाभोगदर्शनादुद्दीपनविभावात्।

---

22. मातृका 4117 इत्यत्र सर्वत्र प्रियंवदेति शब्दः "प्रियमुदा" इत्येवं रीत्या लिखितम्।

अथवा काममप्रतिरूपमस्य वयसो वल्कलं न पुनरलङ्कारश्रियं न पुष्णाति। कुतः–

**सरसिजमनुविद्धं　शैवलेनापि　रम्यं**
**मलिनपि　हिमांशोर्लक्ष्म　लक्ष्मीं　तनोति।**
**इयमधिकमनोज्ञा　वल्कलेनापि　तन्वी**
**किमिव　हि　मधुराणां　मण्डनं　नाकृतीनाम्।। 1–19।।**

[अपि च–

**कठिनमपि　मृगाक्ष्या　वल्कलं　कान्तरूपं**
**न　मनसि　रुचिभंगं　स्वल्पमप्यादधाति।**
**विकचसरसिजायाः　स्तोकनिर्मुक्तकण्ठं**
**निजमिव कमलिन्याः कर्कशं वृन्तजालम्।। 1–20।।]**[23]

**शकुन्तला–**(अग्रतोऽवलोक्य) सहीओ, एस वादेरिदपल्लवाङ्गुलीहिं किं पि वाहरेदि विअ मं चूदरुक्खओ। ता जाव णं संभावेमि। (इति तथा करोति) (सख्यौ, एषः वातेरितपल्लवाङ्गूलीभिः किमपि व्याहरतीव मां चूतवृक्षकः। तद्यावदेनम् सम्भावयामि)

**प्रियंवदा**–हला सउन्तले, इध ज्जेव मुहुत्तअं चिट्ठ। (सखि शकुन्तले, इहैव मूहूर्तकं तिष्ठ।)

**शकुन्तला–**किं णिमित्तं। (किं निमित्तम्।)

---

उर्दनरूप/तद्वर्धनरूप वाग्–व्यापाराच्च निरन्तरोत्पन्न–सात्त्विक–व्यभिचारिभावाच्च रसपुष्टिः। स्वोक्तम् आक्षिपति–अथवेति। अप्रतिमरूप(म्) मन्तव्यं अस्य वयसो यौवनस्येत्यर्थः। शङ्करस्तु वयो यौवनमित्याह। वयो यौवनमात्रके इति विश्वः। न पुष्णाति [इति] न, अपि तु पुष्णात्येव। निषेधस्य निषेधेन स्वायोगव्यवच्छेद इति चातुर्यम्, एवमना(न्य)त्र। अतुल्य सम्बन्धेऽपि शोभात्वे दृष्टेत्याह। सर०। (1-19)। मधुराणां निसर्गसुन्दरीणाम् आकृतीनां समर्थनामाह–किमिव हि इति।। सामान्येन विशेषसमर्थन–रूपो–ऽर्थान्तरन्यासः। स च शकुन्तला–सरसिजयोः सादृश्य–प्रतीतिहेतुकदीपकेन सङ्कीर्णः। स(श)ङ्करस्तु तुल्ययोगितामाह। इदञ्च माधुर्य्यं नाम यौवनालङ्कारः। तदुक्तम्–सर्ब्बावस्थाविशेषेण माधुर्यं रमणीयतेति।

कठिन०।। (1-20)। कान्तरूपमेतत् सङ्गादिति भावः। रुचिरिच्छा स्तोकेति ईषद्–दूखित/(विकच?)पुष्पाऽधोभागम्। पद्यमिदं दाक्षिणात्य–तीरभुक्तीय ग्रन्थेषु न दृश्यते।।

सख्यौ, एष वातेरितपल्लवाङ्गुलीभिः किमपि मां व्याहरतीव वृक्षः, तस्मादेनं सम्भावयामि जन(ल)दानादिना पुरस्करोमि, प्राप्नोमि वा। सखि शकुन्तले, इहैव मुहूर्तं तिष्ठ। किं निमित्तम्। किमर्थम् मया स्थातव्यमित्यर्थः। त्वया समीपस्थितया लतासनाथ इवायं चूतवृक्षः प्रतिभाति। अत एव प्रियमु(यंव)देति, त्वम् उच्यसे।

---

23.　अंशोऽयं रिचार्ड पिशेलेन सम्पादिते बंगदेशीयपाठे न स्वीकृतः।

**प्रियंवदा**–तए समीवट्ठिदाए लदासणाधो विअ अअं चूदरुक्खओ पडिभादि। (त्वया समीपस्थितया लतासनाथः इव अयं चूतवृक्षकः प्रतिभाति।)

**शकुन्तला**–अदो ज्जेव पिअंवद त्ति तुमं वुच्चसि। (अतः एव प्रियंवदा इति त्वम् उच्यते।)

**राजा**–अवितथमाह प्रियंवदा, तथा ह्यस्याः

**अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।**
**कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्।। 1–21।।**

**अनुसूया**–हला सउन्तले, इअं सअंवरवहू सहआरस्स तए किदणामहेआ वणदोसिणि त्ति णोमालिया। (हला शकुन्तले, इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनतोषिणी इति नवमालिका।)

**शकुन्तला**–(उपगम्यावलोक्य च सहर्षम्) हला अणुसूए, रमणीओ क्खु इमस्स पादवमिधुणस्स वदिअरो संवुत्तो। इअं णवकुसुमजोव्वणा णोमालिआ, अअं पि बद्धफलदाए उवभोअक्खमो सहआरो त्ति। (इति पश्यन्ती तिष्ठति)

(सखि अनुसूए, रमणीयः खल्वस्य पादपमिथुनस्य व्यतिकरः संवृत्तः। इयम् नवकुसुमयौवना नवमालिका, अयमपि बद्धफलतया उपभोगक्षमः सहकारः इति।

**प्रियंवदा**–(सस्मितम्) अणुसूए, जाणासि किं णिमित्तं सउन्तला वणदोसिणिं अदिमेत्तं पेक्खदि त्ति। (अनुसूये, जानासि किन्निमित्तं शकुन्तला वनतोषिणीमतिमात्रं प्रेक्षते इति।)

**अनुसूया**–ण क्खु विभावेमि। कधेहि। (न खलु विभावयामि। कथय।)

**प्रियंवदा**–जधा वणदोसिणी सरिसेण पादवेण संगदा तधा अवि णाम अहं पि अत्तणो अणुरूवं वरं लहेअं ति। (यथा वनतोषिणी सदृशेन पादपेन सङ्गता, तथापि नामाहम् अप्यात्मनोऽनुरूपं वरं लभेयेति।)

---

अधरः०।। (1–21)। विटपः शाखी। शाखा तु विटपोऽस्त्रियामिति कोषः। लोभनीयं लोभजनकम्। कर्तर्य्यनीयः। पदोच्चयाख्यम् नाट्यलक्षणमिदम्। स योऽर्थानुरूपो यः पदानां, स पदोच्चय इत्युक्तेः। अत्र हि पद-पदार्थयोः सौकुमार्यं तुल्यमेव। उपमालङ्कारः।

सखि शकुन्तले, इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया "वनतोषिणी"ति नवमालिका तिष्ठतीत्यर्थः। स्वयम्वरवधूः स्वातन्त्र्यविहितवल्लभा। एतेन तवापि स्वातन्त्रेण वल्लभलाभ इति सूचनमिति शङ्करः। रमणीयः खलु एतस्य पादपमिथुनस्य व्यतिकरः संपर्कः संवृत्तः। व्यतिकर इति स्थाने, काल इति पाठः क्वचित्। रमणीयत्वमेवाह, इयं नवकुसुमयौवना नवमालिका, अयमपि बद्धफलतया उपभोगक्षमः सहकारः। अनुसूये, जानासि किं निमित्तं शकुन्तला वनतोषिणीम् अतिमात्रं पश्यति। दृशेः पुलअ-पेच्छ-निअहा इति प्राकृतसूत्रम्। न खलु विभावयामीत्यर्थात्। यथा वनतोषिणी सदृशेन पादपेन सङ्गता, तथाऽहमपि नामानुरूपं वरं लभेयमिति। वरं जामातारम्।

**शकुन्तला**–एस अत्तणो दे चित्तगदो मणोरधो। (एषः आत्मनः ते चित्तगतः मनोरथः।) (इति कलशमावर्जयति।)

**अनुसूया**–हला सउन्तले, इअं तादकण्णेण तुमं विअ सहत्थसंवड्ढिदा माहवीलदा। इमं विसुमरिदा सि। (सखि शकुन्तले, इयम् तातकण्वेन त्वमिव स्वहस्तसंवर्धिता माधवीलता। इमां विस्मृतासि।)

**शकुन्तला**–तदो अत्ताणअं पि विसुमरिस्सं। (लतामुपेत्यावलोक्य च सहर्षम्) अच्छरीअं अच्छरीअं। पिअंवदे, पिअं दे णिवेदेमि। (ततः आत्मानमपि विस्मरिष्यामि। आश्चर्यम् ... ... आश्चर्यम् ....... प्रियंवदे, प्रियं ते निवेदयामि।)

**प्रियंवदा**–सहि, किं मे पिअं। (सखि, किं मे प्रियम्।)

**शकुन्तला**–असमए क्खु एसा आ मूलादो मउलिदा माहवीलदा। (असमये खल्वेषा आमूलात् मुकुलिता माधवीलता।)

**उभे**–(सत्वरमुपगम्य) सहि,सच्चं सच्चं। (सखि, सत्यं सत्यम्।)

**शकुन्तला**–सच्चं, किं ण पेक्खध। (सत्यम्। सखि, किं न प्रेक्षेथे।)

**प्रियंवदा**–(सहर्षम् निरूप्य) तेण हि पडिप्पिअं दे णिवेदेमि। आसण्णपाणिग्गहणा सि तुमं। (तेन हि प्रतिप्रियं ते निवेदयामि। आसन्नपाणिग्रहणासि त्वम्।)

**शकुन्तला**–(सासूयम्) णूणं एस दे अत्तगदो मणोरधो। (नूनम् एषः ते आत्मगतः मनोरथः।)

**प्रियंवदा**–ण क्खु परिहासेण भणामि। सुदं खु मए तादकण्णस्स मुहादो तुए कल्लाणसूअअं इदं णिमित्तं ति। (न खलु परिहासेण भणामि। श्रुतं खलु मया तातकण्वस्य मुखात्तव कल्याणसूचकम् इदं निमित्तम् इति।)

**अनुसूया**–पिअंवदे, अदो ज्जेव सउन्तला ससिणेहा माहवीलदं सिञ्चदि। (प्रियंवदे, अतः एव शकुन्तला सस्नेहा माधवीलतां सिञ्चति।)

**शकुन्तला**–जदो मे बहिणिआ भोदि तदो किं ति ण सिञ्चिस्सं। (यतः मे भगिनी भवति ततः किमिति न सेक्ष्यामि। (इति कलशमावर्जयति)

---

एष आत्मनस्ते चित्तगतो मनोरथः। सखि शकुन्तले, इयं तातकण्वेन त्वमिव स्वहस्तसंवर्द्धिता माधवीलता, तत्कथमेनां विस्मृतासि। गत्यर्थादि-सूत्रे चकारात् कर्तरि क्तः। अतः आत्मानमपि विस्मरिष्यामि। सहर्षम् इति। अस्याः कुसुमोद्‌गमोऽयं मम विवाहसूचक इति भावात्। आश्चर्यम् आश्चर्यम् द्विरुक्ती(क्तिरि)व सावेशेन अकालकुसुमदर्शनाद् आश्चर्यम्। प्रियंवदे, प्रियं ते निवेदयामि। सखि, किम् मे प्रियम्। असमये खल्वेषा आमूलान्मुकुलिता माधवीलता। क्खु-शब्दः खल्वर्थः इति साहित्यरत्नाकरः। सखि, अपि सत्यं, सत्यं किं न पश्यथ। तेन हि प्रतिप्रियं ते निवेदयामि।

**राजा**–अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा भवेत्। अथवा कृतं सन्देहेन,

**असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।**
**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः।। 1–22।।**

तथापि तत्त्वत एनामुपलप्स्ये।

**शकुन्तला**–(ससंभ्रमम्) अम्मो, णोमालिअं उज्झिअ वअणं मे महुअरो अहिलसदि। (अम्भो, नवमालिकामुज्झित्वा वदनं मे मधुकरः अभिलषति।) (इति भ्रमरबाधां रूपयति)

**राजा**–(सस्पृहम्)

**यतो यतः षट्चरणोऽभिवर्तते ततस्ततः प्रेरितवामलोचना।**
**विवर्तितभ्रूरियमद्य शिक्षते भयादकामापि हि दृष्टिविभ्रमम्।। 1–23।।**

अपि च (सासूयमिव)

**चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं**
**रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।**

---

तदेवाह–आसन्नपाणिग्रहणा त्वम्। सासूयमिति। असूया दोषेष्वपि गुणारोपः। नूनमेष ते आत्मगतो मनोरथः। न खलु परिहासेन भणामि। श्रुतं खलु मया तातकण्वस्य मुखात् तव कल्याणसूचकमेतन्निमित्तमिति। खलु वाक्यालङ्कारे। प्रियंवदे, अत एव शकुन्तला सस्नेहा माधवीलतां सिञ्चति। यतो भगिनी भवति, ततः किं न सिञ्चामि। "अपि नामे"ति निपातसमुदायः सम्भावनायाम्। असं(शयम्)०।। (1-22) परिग्रहः परिणयनं, आर्यम् समर्य्यादं, न सर्वगामीत्यर्थः आकाङ्क्षा मात्रेण कथं सस्नेहाभाव इत्याह–सतां हि इति। सन्देहाश्रयेषु मनोव्यापारा एव प्रमाणम्। अर्थान्तरन्यासः। अनुमानमिति शङ्करः। मतिर्नाम व्यभिचारीति भावः। तदुक्तं शास्त्रोक्तार्थानुसन्धानाद् अर्थनिर्धारणम् मतिः। इयं च प्रथमकामावस्था। तदुक्तं–प्रथमेऽभिलाषश्च स्यादिति।। सम्भ्रमस्त्रासः। अम्मो आश्चर्यम्। तदुक्तं भरतेन, विस्मये हे स्महे अम्मे(म्मो?) नित्यं स्त्रीभिः प्रयुज्यत इति।। नवमालिकामुज्झित्वा म(व)दनं मे मधुकरो मेऽभिलषति। शङ्करस्तु–सलिलसेकसम्भ्रान्तो मधुकरो वदनं मे अभिलषति पीडयतीति पाठान्तरम् आह। भ्रमराबाधां भ्रमरकृतपीडाम्। यतो०। (1-23) यतो यत्राभिवर्तते संमुखमागच्छति। ततस्तु एतस्माद् वा प्रेरितो लोचनाञ्चलः कटाक्षो यया। वामेति पाठे वाम सुन्दरं, विवर्तितभ्रूश्चालितभ्रूः, अकामाऽप्यननुभूतकामभावापीत्यर्थः। विभ्रमं विलासः, दृष्टिरियं शृङ्गारे, तदुक्तं सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यत इति।।

चला(पाङ्गां)। (1-24)। रहस्याख्यायी सङ्गोऽप्यकथकः(?) रतिसर्वस्वं रतिनिधानं मधु सर्वस्वमिति क्वचित् पाठः। हताः शोच्या, ब्राह्मणी न वेति सन्देहे, नाहमेनां न कामये, त्वं पुनरसन्दिग्ध एनां कामयसे इति तव कृतार्थत्वम्। अन्योऽपि नागरो लोचनचुम्बनं, कर्णान्तिके लघुभाषणं, अधरपानञ्च करोति। अभिलाषरूपा प्रथमावस्थेयमिति शङ्करः। वाक्यार्थहेतुः काव्यलिङ्गालङ्कारः।

**करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं**
**वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती।। 1–24।।**

**शकुन्तला**–हला, परित्ताअध मं इमिणा दुट्ठमहुअरेण अहिभूअमाणं। (सख्यौ, परित्रायेथाम् मामनेन दुष्टमधुकरेणाभिभूयमानाम्।

**उभे**–(सस्मितम्) काओ अम्हे परित्ताणे। एत्थ दाव दुस्सन्तं सुमर, जदो राअरक्खिदाइं तवोवणाइं। (के आवाम् परित्राणे। अत्र तावत् दुःषन्तं स्मर, यतः राजरक्षितानि तपोवनानि।)

**राजा**–अवसरः खल्वयम् आत्मानं दर्शयितुम्। न भेतव्यम् ..................। (इत्युर्धोक्ते) (अपवार्य) एवं राजाहमिति परिज्ञानं भवेत्। भवतु, अतिथिसमाचारमवलम्बिष्ये।

**शकुन्तला**–ण एसो दुव्विणीदो विरमदि। ता अण्णदो गमिस्सं। (पादान्तरे सदृष्टि-विक्षेपम्) हद्धी हद्धी। कधं इदो वि मं अणुसरदि। ता परित्ताअध मं।

(नैषः दुर्विनीतः विरमति, तदन्यतः गमिष्यामि। हा धिक्, हा धिक्, इतोऽपि मामनुसरति। तत्परित्रायेथाम् माम्।)

**राजा**–(सत्वरमुपगम्य) आः–

**कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्।**
**अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु।। 1–25।।**

(सर्वा राजानं दृष्ट्वा किं चिदिव सम्भ्रान्ताः।)

---

सख्यौ, परित्रायेथां मां मधुकरेणाऽभिभूयमानाम्। के आवां परित्राणे। अत्र तावद् दुःस्व(ष)न्तम् स्मर, यतो राजरक्षितानि तपोवनानि।। नैष दुर्विनीतो विरमति। तत्तस्माद् अन्यतोऽन्यत्र गमिष्यामि। हन्धी खेदे, हा धिगित्यर्थे वा। हन्धीत्यव्ययं खेदे इति प्राकृत-साहित्यरत्नाकरः। हन्धीति हा धिगित्यर्थे नित्यं स्त्रीभिः प्रयुज्यत इति नाट्यलोचनः। शङ्करस्तु आवेगाद् द्विरुक्तिः। प्राकृते हा धिगित्यर्थे "हन्धी" नित्यं द्विरुच्यत इति भरत इत्याह। कथमितोऽपि माम् अनुसरति, तत् परित्रायेथाम्।

आः कोपे। कः पौ०। मुग्धासु (1-25) निरपराधास्विति यावत्। कोऽयम् अज्ञातशीलः। अध्यवसाय नामा नाट्यालङ्कारोऽयम्। यदाह कार्येष्वध्यवसायो यश्च लनागर्भितं वचः इति शङ्करः। आर्य, न किञ्चिदत्याहितं महाभीतिः। किन्तु इयं नः प्रियसखी मधुकरेणाकुलीक्रियमाणा कातरीभूता अस्तीति शेषः। इदानीम् अतिथिविशेषलाभेन। तपो वर्द्धत इत्यनुषङ्गः च अनुवृत्तिर्नाम नाट्यालङ्कारोऽयम्।

**अनुसूया**–अज्ज, ण किं पि अच्चाहिदं। किं तु इअं णो पिअसही महुअरेण आउलीअमाणा कादरीभूदा। (आर्य, न किमप्यत्याहितम्। किन्तु, इयम् नौ प्रियसखी मधुकरेणाकुलीक्रियमाणा कातरीभूता।) (इति शकुन्तलां दर्शयति।)

**राजा**–(शकुन्तलामुपेत्य) अयि तपो वर्धते। (शकुन्तला ससाध्वसम् अवनतमुखी तिष्ठति।)

**अनुसूया**–इदाणिं अदिधिविसेसलम्भेण। (इदानीमतिथिविशेषलाभेन।)

**प्रियंवदा**–साअदं अज्जस्स। हला सउन्तले, गच्छ उडआदो फलमिस्सं अग्घं उवहर। इदं पि पादोदअं भविस्सदि। (स्वागतमार्यस्य,सखि शकुन्तले,गच्छ कुटजात्फलमिश्रम् अर्घमुपहर। इदमपि पादोदकम् भविष्यति।)

**राजा**–भवति, सूनृतयैव वाचा कृतमातिथ्यम्।

**अनुसूया**–तेण हि इमस्सिं सहावसीदलाए सत्तवण्णवेदिआए उवविसिअ परिस्समं अवणेदु अज्जो। (तेन ह्यस्याम् स्वभावशीतलायां सप्तपर्णवेदिकायामुपविश्य परिश्रमम् उपनयतु आर्यः।)

**राजा**–ननु यूयमप्यनेन धर्मकर्मणा परिश्रान्ताः। तन्मुहूर्तमुपविशत।

**प्रियंवदा**–(जनान्तिकम्) हला सउन्तले, उइदं णो अदिधिपज्जुवासणं। ता एहि उवविसम्ह। (सखि शकुन्तले, उचितं नः अतिथिपर्युपासनम्। तत् एहि उपविशामः। (इति सर्वा उपविशन्ति।)

**शकुन्तला**–(आत्मगतम्) किं णु क्खु इमं जणं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीअ म्हि संवृत्ता। (किन्तु खलु इमं जनं प्रेक्ष्य तपोवनविरोधिनः विकारस्य गमनीया अस्मि संवृत्ता।)

**राजा**–(सर्वा अवलोक्य) अहो, समानवयोरूपरमणीयं सौहार्दमत्रभवतीनाम्।

---

तदुक्तं अत्र... दनुवर्तनमनुवृत्तिरिति। स्वागतमार्य्यस्य। सखि शकुन्तले, गच्छ कुटजात् फलमिश्रमर्घमस्मै उपहर। इदमपि पादोदकं भविष्यति। तेन हि अस्यां स्वभाव-शीतलायां सप्तपर्णवेदिकायाम् उपविश्य परिश्रममुपनयत्वार्यः। प्रच्छायशीतलायाम् इति शङ्करधृतः पाठः। सप्तपर्णतले या वेदिः परिष्कृतभूमि-र्विश्रामस्थानमिति यावत्।

जनान्तिकमिति। त्रिपताककरेणाऽन्यम् अपवार्यान्तरा कथाम् अन्योन्यामन्त्रणं यत् स्यात्, जनान्ते तज्जनान्तिकमिति। हस्तेन त्रिपताकेन संज्ञया यदुदीर्यते, बहूनां पूरतो मध्ये तज्जनान्तिकमुच्यते इत्यन्यत्र। सखि शकुन्तले, उचितं नोऽतिथि-पर्युपासनं, तदेह्युपविशामि(मः)।

किन्नु खलु इमं जनं प्रेक्ष्य तपोवन-विरोधिनो विकारस्य गमनीयाऽस्मि संवृत्ता। नु-शब्दो वितर्के। खलु-शब्दो निश्चये। अत्रभवतीनां श्लाघ्यानां भवतीनामित्यर्थः। सखि अनुसूये, क एष मधुरगम्भीरा-कृतिर्मधु[र] समालेपन प्रभुत्वदाक्षिण्यं विस्तारयति। गाम्भीर्य्यमाह भरतः। विकाराः

**प्रियंवदा**–(जनान्तिकम्) हला अणुसूए, को णु क्खु एसो दुरवगाहगम्भीराकिदी महुरं आलवन्तो पहुत्तदक्खिण्णं वित्थारेदि। (सखि अणुसूये, को नु खल्वेषः दुरवगाह-गम्भीराकृतिः मधुरमालपन् प्रभुत्वदाक्षिण्यम् विस्तारयति।)

**अनुसूया**–हला, ममावि कोदूहलं। पुच्छस्सं दाव णं। (प्रकाशम्) अज्जस्स महुरालावजणिदो विस्सम्भो मं आलावेदि। कदरो उण अज्जेण राएसिवंसो अलंकरीअदि कदरो वा देसो विरहपज्जुस्सुओ करीअदि। किं णिमित्तं अज्जेण सुउमारेण तवोवणागमणपरिस्समे अप्पा उवणीदो त्ति। (सखि, ममापि कौतुहलम्। प्रक्ष्यामि तावदेनम्। आर्यस्य मधुरालापजनितः विश्रम्भः मामालापयति। कतरः पुनरार्येण राजर्षिवंशः अलङ्क्रियते, कतरः वा देशः विरहपर्युत्सुकः क्रियते। किन्निमित्तमार्येण सुकुमारेण तपोवनागमनपरिश्रमे आत्मा उपनीतः इति।)

**शकुन्तला**–(आत्मगतम्) हिअअ, मा उत्तम्म जं तए चिन्तिदं तं अणुसूआ मन्तेदि। (हृदय, मा उत्ताम्य। यत्त्वया चिन्तितं तत् अनुसूया मन्त्रयते।)

**राजा**–(स्वगतम्) कथमिदानीमात्मानं निवेदयामि, कथं वात्मनः परिहारं करोमि। (विचिन्त्य) भवत्वेवं तावत्। (प्रकाशम्) भवति, वेदविदस्मि राज्ञः पौरवस्य नगरधर्माधिकारे नियुक्तः पुण्याश्रमदर्शनप्रसङ्गेन धर्मारण्यमिदमायातः।

**अनुसूया**–सणाधा धम्मआरिणो। (सनाथाः धर्मचारिणः।)

(शकुन्तला शृङ्गारलज्जां नाटयति)

**सख्यौ**–(उभयोराकारं विदित्वा जनान्तिकम्) हला सउन्तले, जइ अज्ज तादो इध संणिहिदो भवे। (सखि शकुन्तले, यद्यद्य तातः इह सन्निहितः भवेत्।)

**शकुन्तला**–तदो किं भवे। (ततः किं भवेत्।)

---

सहजा यस्य हर्षशोकभयादिषु भावेषु नोपलभ्यन्ते तद् गाम्भीर्यमुदाहृतम् इति। प्रभुत्वदाक्षिण्यं प्रभुत्वेन सह दाक्षिण्यं, पाठान्तरे प्रभूतं बहुलम्। शङ्करस्तु चटुना(चतुरा) मनोहरा गंभीरा चेति पाठमाह। ममापि कौतुहलं ज्ञानोत्कण्ठा तत् प्रवेक्षामि तावदेनम्। प्रकाशमिति। सर्व्वश्राव्यम् प्रकाशं स्यादिति भरतः। आर्यस्य मधुरालापजनितो विस्रम्भो विश्वासो माम् आलापयति, अर्थयते भवन्तं पृच्छामीति शेष इति शङ्करः। कतरः पुनरार्य्येण राजर्षिवंशोऽलङ्क्रियते। कतरः च पुनर्वर्ण इति शङ्करसम्मतः पाठः। कतरो वा देशो विरहपर्युत्सुकः क्रियते। किं निमित्तं वा आर्येण सुकुमारेण तपोवनपरिश्रमे उपनीयते। तपोवनागमनं किं निमित्तमित्यर्थः। हे हृदय, मा उत्ताम्य। मा ग्लानं भव, यत् त्वया चिन्तितं तदनुसूया मन्त्रयते, पृच्छति।

क्रमेणानुसूया कृतप्रश्ने उत्तराण्याह-वेदविदिति। ब्राह्मणङ्क्त्र(क्षत्रिय)योरेव सम्बद्धत्वात् सङ्गोपनं प्रकाशते बोद्धव्यं धर्माधिकारेत्युभयत्र संलग्नमिति सर्वत्र सत्यवादि[त्व]म् अखण्डमेवास्छि(स्थि) तमिति भावः। सनाथा धर्म्मचारिणः। त्वन्ने(मेवं) तपोवनमिदं अलङ्कृतवानसीति भावः।

**उभे**–तदो जीविदसव्वस्सेणावि इमं अदिधिविसेसं किदत्थं करेदि। (ततः जीवितसर्वस्वेनौपि इमम् अतिथिविशेषं कृतार्थं करोति।)

**शकुन्तला**–(सकृतक-कोपम्) अवेध, किं पि हिअए कदुअ मन्तेध। ण वो वअणं सुणिस्सं। (अपेतम्, किमपि हृदये कृत्वा मन्त्रयेथे। न वां वचनं श्रोष्यामि।)

**राजा**–वयमपि तावद्भवत्यौ सखीगतं किं चित्पृच्छामः।

**उभे**–अज्ज अणुग्गहे वि अब्भत्थणा। (आर्य, अनुग्रहे अप्यभ्यर्थना।)

**राजा**–तत्रभवान् कण्वः शाश्वते ब्रह्मणि वर्तते, इयं च वः सखी तस्यात्मजेति कथमेतत्।

**अनुसूया**–सुणादु अज्जो, अत्थि कोसिओ त्ति गोत्तणामहेओ महप्पहावो राएसी। (शृणोत्वार्यः, अस्ति कौशिकः इति गोत्रनामधेयः महाप्रभावो राजर्षिः।)

**राजा**–तत्रभवान्कौशिकः।

**अनुसूया**–तं सहीए पहवं अवगच्छ। उज्झिदसरीरसंवड्ढणाए उण तादकण्णो से पिदा। (तं सख्याः प्रभवमवगच्छ। उज्झितशरीरसंवर्धनया पुनः तातकण्वः अस्याः पिता।)

**राजा**–उज्झित शब्देन जनितं नः कुतूहलम्। तदा मूलाच्छ्रोतुमिच्छामः।

**अनुसूया**–सुणादु अज्जो, पुरा किल तस्स राएसिणो उग्गे तवसि वट्टमाणस्स कधं पि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा णिअमविग्घआरिणी पेसिदा। (शृणोत्वार्यः, पुरा किल तस्य राजर्षेः उग्रे तपसि वर्तमानस्य कथमपि जातशङ्कैः देवैः मेनका नामाप्सराः नियमविघ्नकारिणी प्रेषिता।)

**राजा**–अस्त्येतदन्यसमाधिभीरुत्वं देवानाम्। ततस्ततः।

**अनुसूया**–तदो वसन्तोदाररमणीए समए उन्मादइत्तअं ताए रूवं पेक्खिअ।

---

शृङ्गारलज्जां शृङ्गारकृतलज्जां नाटयत्यभिनयति। आकारमान्कृतिं चेष्टां वा, आकारस्त्विङ्गिताकृत्ययोरिति मेदिनी। सखि शकुन्तले, यद्यद्य तात इह सन्निहितो भवेत्ततः किं भवेत्।

वे(ले)शाख्योऽयमलङ्कारः। तदुक्तं यद्वाक्यं वाक्यकुशलैः सुश्लिष्टार्थं प्रयुज्यते। नैपुण्योद्घाट्यते यत्र स लेशः परिकीर्तितः।। इति शङ्करः।

ततो जीवितसर्वस्वेनापि इममतिथिविशेषं कृतार्थं करोति। अथ च जीवितसर्वस्वं तस्य त्वमेव। अपसरतम्, किमपि हृदये कृत्वा मन्त्रयेथे, न युवयोर्वचनं श्रोष्यामि। सखीगतं शकुन्तलागतम्। आर्य, अनुग्रहेऽप्यभ्यर्थना। शृणोत्वार्यः, अस्ति कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः। कुशिकस्यापत्यमिति, कुलक्रमागतं नामेत्यर्थः। तं सख्याः प्रभवं पितरमवगच्छ। स्याज्जन्महेतुः प्रभव इति शाश्वतः। उज्झितशरीरसम्वर्द्धनया। पुरस्तात् कण्वोऽस्याः पिता। शृणोत्वार्यः, पुरा किल तस्य राजर्षे उग्रे तपसि वर्तमानस्य कथमपि जातशङ्कैर्दैवैर्मेनका नामाप्सरा नियमविघ्नकारिणी प्रेषिता। तस्यास्तत्र गमनानध्यवसायात् कथमपीत्युक्तम्। ततो वसन्तोदारे रमणीये समये उन्मादि उन्मादकारि,

(ततो वसन्तोदाररमणीये समये उन्मादयितृकं तस्याः रूपं प्रेक्ष्य।)

(इत्योर्धोक्ते लज्जां नाटयति)

**राजा**–पुरस्तादवगम्यत एव। सर्वथाप्सरःसम्भवैषा।

**अनुसूया**–अध इं। (अथ किम्।)

**राजा**–उपपद्यते,

**मानुषीभ्यः कथं नु स्यादस्य रूपस्य संभवः।**
**न प्रभातरलं ज्योतिरुदेति वसुधातलात्।। 1–26।।**

(शकुन्तला सव्रीडाधोमुखी तिष्ठति)

**राजा**–(आत्मगतम्) हन्त, लब्धावकाशा मे मनोरथाः।

**प्रियंवदा**–(सस्मितम् शकुन्तलां विलोक्य) पुणो वि वत्तुकामो विअ अज्जो। (पुनः अपि वक्तुकामः इव आर्यः।) (शकुन्तला सखीमङ्गुल्या तर्जयति।)

**राजा**–सम्यगुपलक्षितं भवत्या। अस्ति नः सुचरितश्रवणलोभादन्यदपि प्रष्टव्यम्।

**प्रियंवदा**–तेण हि अलं विआरिदेण। अणिज्जन्तणणिओओ क्खु तवस्सिअणो। (तेन हि अलं विचारितेन। अनियन्त्रणनियोगः खलु तपस्विजनः।)

**राजा**–एतत्पृच्छामि–

**वैखानसं किमनया व्रतमाप्रदानाद्**
**व्यापाररोधि मदनस्य निषेवितव्यम्।**
**अत्यन्तमेव सदृशेक्षणवल्लभाभि–**
**राहो निवत्स्यति समं हरिणाङ्गनाभिः।। 1–27।।**

---

हेतुकशब्दो मतुबर्थः। तस्या रूपं प्रेक्ष्य दृष्ट्वा लज्जामिति रहस्यनिवेदनात्। अथ किं स्वीक्रिया नामे इति नाट्यलोचनः।

मानुषी। (1–26) अस्य परिदृश्यमानस्य प्रभावो हि तेजसो रूपमित्यागमः। तच्च रूपं सौरचान्द्रादि तेजस एव नान्यस्य। प्रभया तरलं प्रभातरलं वसुधातलात् पातालात्, किन्तु गगनादेरित्यर्थः। प्रभातरलं ज्योतिर्विद्युदिति केचित्। प्रतिवस्तूपमालङ्कारः। तदुक्तं प्रतिवस्तूपमा सा स्यात् वस्तुनो रूप्यमानयोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति। अर्थान्तरन्यास इति शङ्करभ्रमः। लब्धेति। असवर्णत्व निश्चयादिति भावः। पुनरपि वक्तुकाम इवार्यो लक्ष्यते। अङ्गुलि(ल्या) तर्जनञ्च। ललिताख्यो भावः। तदुक्तं कविकण्ठहारेण भ्रू–नेत्रादिक्रियाशाली सुकुमारविधानतः। हस्तपादादि–विन्यासस्तरुण्या ललितं मतमिति।। तेन हि अलं विचारितेन, अनियन्त्र[ण]नियोगः खलु तपास्विजनः, तेन हीति स्वीकारे। तेन हि स्वीकृतौ प्रोक्तम्। तथा हेतुविधानयोरिति कोषः इति शङ्करः। वैखा०।। (1–27) वैखानसं नियतारण्यवासरूपम् आप्रदानं वराय प्रदानपर्यन्तं, निवत्स्यति स्थास्यति। आहो विकल्पे मृगीभिः सह।

**प्रियंवदा**–अज्ज, धम्माअरणपरव्वसो अअं जणो। गुरुणो उण से अणुरूववरप्पदाणे संकप्पो। (आर्य, धर्माचरणपरवशोऽयं जनः। गुरोः पुनः अस्याः अनुरूपवरप्रदाने सङ्कल्पः।)

**राजा**–(आत्मगतं सहर्षम्)

**भव हृदय साभिलाषं सम्प्रति सन्देहनिर्णयो जातः।**
**आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्।। 1–28।।**

**शकुन्तला**–(सरोषमिव) अणुसूए, गमिस्सं अहं। (अनुसूये, गमिष्याम्यहम्।)

**अनुसूया**–किं णिमित्तं। (किं निमित्तम्)

**शकुन्तला**–इमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए गदुअ णिवेदइस्सं। (इमामसंबद्धप्रलापिनीम् प्रियंवदाम् आर्यायै गौतम्यै गत्वा निवेदयिष्यामि। (इत्युत्तिष्ठति)

**अनुसूया**–सहि, ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं। (सखि, न युक्तं आश्रमवासिनः जनस्य अकृतसत्कारम् अतिथिविशेषम् उज्झित्वा स्वच्छन्दतः गमनम्। (शकुन्तला उत्तरम् अदत्त्वैव प्रस्थिता)

**राजा**–(अपवार्य) कथं गच्छति ......। (उत्थाय जिघृक्षुरिवेच्छां निगृह्य) अहो, चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः। अहं हि–

**अनुयास्यन् मुनितनयां सहसा विनयेन वारितप्रसरः।**
**स्वस्थानादचलन्नपि गत्वेव पुनः प्रतिनिवृत्तः।। 1–29।।**

**प्रियंवदा**–(शकुन्तलामुपसृत्य) हला चण्डि ण लम्भदि गन्तुं। (सखि चण्डि न लभ्यते गन्तुम्)

**शकुन्तला**–(परिवृत्त्य सभ्रूक्षेपम्) किं ति। (किमिति।)

---

आर्य, धर्माचरण-वशः परतन्त्रोऽयं जनः। गुरोः पुनरनुरूपवरप्रदाने सङ्कल्पः। वरो जामातरि श्रेष्ठे इति शाश्वतः। आयत्ततायाम् आयत्ते प्रभुत्वं च वशं विदुरिति च। असवर्णत्व-निश्चयाद्योग(ग्य) वरप्रदाने श्रवणाच्च प्रमोदातिशयात्। स्वहृदयमुद्दिश्याह।

भव०।। (1-28) हे हृदय, साकाङ्क्षं भव। संप्रति प्रियमु(यंव)दाकथानन्तरं सन्देहनिर्णयः सन्देहान्निश्चयो जातः। सन्देहे सति यो निर्णय इति शङ्करः। यद् वस्तु शकुन्तलारूपं ब्राह्मणीजत्वेनाग्निमाशंकसे, तत् स्पर्शयोग्यं रत्नमेव जातम्। अनुसूये, गमिष्याम्यहं। किं निमित्तम्। इमामसम्बद्धप्रलापिनीं प्रियमु(यंव)दाम् आर्यायै गौतम्यै गत्वा निवेदयिष्यामि। सखि, न पुनराश्रमवासिनो जनस्याकृतसत्कारम् अतिथिविशेषम् उज्झित्वा स्वच्छन्दतो गमनम्। शिक्षाख्यो नाट्यालंकारोऽयम्। शिक्षा स्याद् उपदेशनमित्युक्तेः। प्रतिरूपिका सदृशी। अहं। (1-28) सहसा अन्वयास्यन् कुलमर्यादया निवारित-स्वच्छन्दाचरणः गत्वेवेति। इव सम्भावनायाम्। चण्डि कोपने, न लभ्यते गन्तुं त्वयेति शेषः। सभ्रूक्षेपेति ललिताख्योऽयं हावविशेषः। तदुक्तं सुकुमारतया अङ्गानां विन्यासो ललितं मतमिति। किमिति, कथं न लभ्यते गन्तुमित्यनुषङ्गः।।

**प्रियंवदा**–दुवे मे रुक्खसेअणके धारेसि। तेहिं दाव अत्ताणअं मोओवेहि तदो गमिस्ससि। (द्वे मे वृक्षसेचनके धारयसि। ताभ्यां तावदात्मानम् मोचय। ततः गमिष्यसि।) (इति बलान्निवर्तयति)

**राजा**–वृक्षसेचनाद् एवात्रभवतीं परिश्रान्तामवगच्छामि। तथा ह्यस्याः–

**स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणाद्**
**अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।**
**बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं**
**बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः।। 1–30।।**

तदहमेनामनृणां करोमि। (इत्यङ्गुरीयकं ददाति)।।

(सख्यौ प्रतिगृह्य नामाक्षराणि वाचयित्वा च परस्परमवलोकयतः।)

**राजा**–अलम् अन्यथासंभावनया। राज्ञः प्रतिग्रहोऽयम्।

**प्रियंवदा**–तेण हि णारिहदि इमं अङ्गुरीअविओअं कादुं अज्जो। अज्जस्स वअणादो ज्जेव अरिणा एसा भोदु। (तेन हि, न अर्हति इमम् अङ्गुरीयवियोगम् कर्तुमार्यः। आर्यस्य वचनादेवानृणा एषा भवतु।)

**अनुसूया**–हला सउन्तले, मोआविदा सि अणुकम्पिणा अज्जेव अध वा महाराएण। ता कहिं दाणिं गमिस्ससि। (सखि शकुन्तले, मोचितासि अनुकम्पिनार्येण, अथ वा महाराजेन। तत्कुत्र इदानीं गमिष्यसि।

**शकुन्तला**–(आत्मगतम्) ण एदं परिहरिस्सं, जइ अत्तणो पहवे। (नैतम् परिहरिष्यामि यदि आत्मनः प्रभवामि।)

**प्रियंवदा**–संपदं किं ण गच्छीअदि। (साम्प्रतं किं न गम्यते।)

**शकुन्तला**–इदाणिं पि किं तुह आअत्त म्हि। जदा मे रोअदि तदा गमिस्सं। (इदानीमपि किं तवायत्तास्मि। यदा मे रोचते तदा गमिष्यामि।)

---

द्वे मे वृक्षसेचनके धारयसि। ताभ्यां तावदात्मानं मोचय। ततो गमिष्यसि।

स्रस्तां०।। (1-30) लोहिततलौ रक्तकरोदरौ। जालकं समूहः। जालकं कोरके सङ्घे इति विश्वः। विकीर्णाः केशा एव करसंयमिता अनुमानमलङ्कारः। राज्ञ इति राज्ञो दत्तमिदमिति प्रतारणा। अथ च राज्ञा इदं ध्रियत एवेति सत्यमेव। तेन हि नार्हतीमम् अङ्गुरीयकवियोगं कर्तुम् आर्यः। आर्य्यस्य वचनादेवैषानृणा भवतु। सखि शकुन्तले, मोचितास्यनुकम्पिनार्येण, अथवा राजर्षिणा। तत् कुत्रेदानीं गमिष्यसि। पाठान्तरे तत् कृतार्थेदानीमसि। नेदं परिहरिष्यामि, ययात्मन प्रभवामि। पाठान्तरे नेदं विस्मरिष्यामि। किं साम्प्रतं न गच्छसि। इदानीमपि किं तवायत्तास्मि?, यदा मे रोचते तदा गमिष्यामि। अथ च तवाधीना किं?, किं तर्ह्यूपकारिण एवेति भावः।

**राजा**–(शकुन्तलां विलोकयन्नात्मगतम्) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान् प्रति स्यात्। अथवा लब्धावकाशा मे मनोवृत्तिः।

**वाचं न मिश्रयति यद्यपि मद्वचोभिः**
**कर्णं ददात्यवहिता मयि भाषमाणे।**
**कामं न तिष्ठति मदाननसंमुखीयं**
**भूयिष्ठमन्यविषया न तु दृष्टिरस्याः।। 1–31।।**

(नेपथ्ये) भो भोस्तपस्विनः। तपोवनसन्निहितसत्त्वरक्षणाय सज्जीभवन्तु भवन्तः। प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुःषन्तः।

**तुरगखुरहतस्तथा हि रेणुर्विटपनिषक्तजलार्द्रवल्कलेषु।**
**पतति परिणतारुणप्रकाशः शलभसमूह इवाश्रमद्रुमेषु।। 1–32।।**

**राजा**–(स्वगतम्) अहो धिक्, कथं मदन्वेषिणः सैनिकास्तपोवनमभिरुन्धन्ति। (पुनर्नेपथ्ये) भो भोस्तपस्विनः। पर्याकुलीकुर्वन् वृद्धस्त्रीकुमारकानेष प्राप्तः।

**तीव्राघातादभिमुखतरुस्कन्धभग्नैकदन्त :**
**प्रौढाकृष्टव्रततिवलयासङ्गनाज्जातपाशः ।**
**मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो**
**धर्मारण्यं विरुजति गजः स्यन्दनालोकभीतः।। 1–33।।**

(सर्वाः श्रुत्वा ससंभ्रममुत्तिष्ठन्ति।)

**राजा**–अहो धिक्, कथमपराद्धस्तपस्विनामस्मि। भवतु तावत्, प्रतिगच्छामि।

**सख्यौ**–महाभाअ, इमिणा हत्थिसंभमेण पज्जाउलाओ म्ह। ता अणुजाणाहि णो उडअगमणे। (महाभाग, अनेन हस्तिसंभ्रमेण पर्याकुलाः स्मः। तदनुजानीहि नः उटज-गमने)

**अनुसूया**–(शकुन्तलां प्रति) हला सउन्तले, आउला अज्जा गोदमी भविस्सदि। ता एहि। सिग्धं एक्कत्थाओ होम्ह। (सखि शकुन्तले, आकुला आर्या गौतमी भविष्यति। तदेहि शीघ्रम् एकास्थाः भवामः।)

---

वाचं०।। (1-31) कामं यथेष्टम् यथा स्यात्। तथा चैवंविधवैदग्ध्य-प्रकाशनान्मदनुरक्ते वेयमिति भावः। अनुमानालङ्कारः। रसान्तराक्षेपमाह–नेपथ्य इति। अर्थोपक्षेपकाभेदैश्चूलिकेयम्। तदुक्तम्–अन्तर्जवनिका संस्थैः सूचनार्थस्य चूलिकेति। तुरग०।। (1-32) तथाहि शब्दो इत्यर्थः। विटपः शाखापल्लवसमुदायः, अरुणः सूर्यः। धिक् खेदे। तीव्रा। (1-33) तीव्राघातास्तीव्रा गमनात्, स्कन्धेत्यनेन गजस्योच्चैस्त्वमुक्तं व्रततिर्लतेरगनपाश इव। मूर्तो विघ्न इवेति। उत्प्रेक्षालङ्कारः। शारङ्गो हरिणः। प्रतिगच्छामि प्रतिनिवृत्य गच्छामि। महाभाग अनेन हस्तिसंभ्रमेण पर्याकुला स्मः। तदनुजानीहि नोऽस्मान् उटजगमनाय। उटजः पर्णशाला। सखि शकुन्तले, पर्याकुलास्मदनुसन्धायेत्यर्थः। आर्या गौतमी भविष्यति, तदेहि शीघ्रमेकस्था भवामः।

**शकुन्तला**–(गतिसंरोधं रूपयित्वा) हद्धी हद्धी, ऊरुत्थम्भविअल म्हि संवुत्ता। (हा धिक्, हा धिक्, ऊरुस्तम्भविह्वलास्मि संवृत्ता।)

**राजा**–स्वैरं स्वैरं गच्छन्तु भवत्य:। वयमप्याश्रमबाधा यथा न भवति तथा प्रयतिष्यामहे।

**सख्यौ**–महाभाअ, विदिदभूइट्ठो सि। णं सम्पदं जं उवआरमज्झत्थदाए अवरद्धाओ म्ह तं मरिसेसि। असंभाविदसक्कारं भूओ वि पच्चवेक्खणणिमित्तं सपरिहारं अज्जं विण्णवेमो। (महाभाग विदित भूयिष्ठ: असि। ननु साम्प्रतं यत् उपचारमध्यस्थतया अपराद्धा स्म: तत् मर्षिष्यसि। असम्भावितसत्कारं भूयोपि प्रत्यवेक्षणनिमित्तम् सपरिहारम् आर्यम् विज्ञापयाम:।)

**राजा**–मा मैवम्। दर्शनेनैवात्रभवतीनां पुरस्कृतोऽस्मि।

**शकुन्तला**–अहिणवकुससूइपरिक्खदं मे चलणं, कुरुवअसाहापरिलग्गं च मे वक्कलं। ता पडिवालेध मं जाव णं मोआवेमि। (अभिनवकुशसूचिपरिक्षतं मे चरणं, कुरुबक-शाखापरिलग्नम् च मे वल्कलम्। तत्प्रतिपालयतं मां यावत् एतन् मोचयामि।)

(इति राजानमवलोकयन्ती सह सखीभ्यां निष्क्रान्ता।)

**राजा**–(नि:श्वस्य) गता: सर्वा:। भवतु, अहमपि गच्छामि। शकुन्तलादर्शनादेव मन्दौत्सुक्योऽस्मि नगरगमनं प्रति। यावदनुयात्रिकानतिदूरे तपोवनस्य निवेशयामि। न खलु शक्तोऽस्मि शकुन्तलाव्यापारादात्मानं निवर्तयितुम्। कुत:–

**गच्छति पुर: शरीरं धावति पश्चादसंस्थितं चेत:।**
**चीनांशुकमिव केतो: प्रतिवातं नीयमानस्य।। 1–34।।**

(इति निष्क्रान्ता: सर्वे)

।। इति प्रथमोऽङ्कः।।

---

हा धिक् हा धिक् उरुस्तम्भ विह्वलास्मि संवृत्ता। महाभाग, विदितभूयिष्ठोऽसि ज्ञाततत्त्वोऽसीत्यर्थ:। साम्प्रतं यदुपचार-मध्यस्थतया पूजाशैथिल्येनापराद्धा: स्म:, तन्मर्षिष्यसि। असम्भावितसत्कारं भूय: प्रत्यवेक्षण-निमित्तं सपरिहारमार्य्यं विज्ञापयाम:। अभिनव-कुशसूचिपरिक्षतं मे चरणम्। कुरबकशाखाप्रतिलग्नं च मेऽञ्चलम्। तत् प्रतिपालयत मां यावदेतन्मोचयामि। गच्छ०।। / (1-34) गच्छति, न तु धावति। पुरोऽग्रे पश्चात् शरीरस्येत्यर्थात् धावति, शकुन्तलां लक्षीकृत्येऽर्थात् न तु गच्छति। चीनं वस्त्रभेद:, तस्य च सूक्ष्मत्वाद्वेग-गमनादुपमितम्। केतोर्ध्वजदण्डस्य प्रतिवातं वाताभिमुखम्। उपमालङ्कार:। एतेन पराङ्गसूचनाद् अङ्कावताराख्योऽर्थोपक्षेपक उक्त:। प्रत्यक्ष-नेतृ-चरितो रसभावसमुज्ज्वल:। अन्ते निष्क्रान्त-निखिलपात्रोऽङ्क इति कीर्तित:।।

**।। इति महामहोपाध्याय-श्रीविष्णुपण्डित-तनुजन्म-श्रीचन्द्रशेखर-चक्रवर्ति-कृतावभिज्ञान-शकुन्तल-टीकायां प्रथमाङ्क-विवरणम्।।**

—•—

## ।। द्वितीयोऽङ्कः ।।

(ततः प्रविशति विदूषकः)

**विदूषकः**–(निःश्वस्य) ही माणहे भो। हदो म्हि एदस्स मिअआसीलस्स रण्णो वअस्सभावेण णिव्विण्णो। अअं मिओ अअं वराहो त्ति मज्झंदिणे वि गिम्हे विरलपादवच्छाआसुं वणराईसुं आहिण्डिअ पत्तसंकरकसाअविरसाइं उण्हकडुआइं पिबीअन्ति गिरिणदीसलिलाइं। अणिअदवेलं च उण्हुण्हं मंसं भुञ्जीअदि। तुरअगआणं च सद्देण रत्तिं पि णत्थि पकामसुइदव्वं। महन्ते ज्जेव पच्चूसे दासीएपुत्तेहिं साउणिअलुद्धेहिं कण्णोवघादिणा वणगमणकोलाहलेण पबोधीआमि। एत्तिकेणावि दाव पीडा ण वुत्ता जदो गण्डस्स उवरि विडआ संजाआ। जेण किल अम्हेसुं अवहीणेसुं तत्थभवदा मिआणुसारिणा अस्समपदं पविट्ठेण मम अधण्णदाए सउन्तला णाम का वि तावसकण्णआ दिट्ठा। तं पेक्खिअ संपदं णअरगमणस्स कधं पि ण करेदि। एदं जेव चिन्तअन्तस्स मम अच्छीसुं पहादा रअणी। ता का गदी। जाव णं किदाआर–परिकम्मं पिअवअस्सं पेक्खामि। (परिक्रम्यावलोक्य च) एसो बाणासणहत्थो हिअअणिहिदपिअअणो वणपुप्फमालाधारी इदो ज्जेव आअच्छदि पिअवअस्सो। भोदु। अङ्गामद्दविअलो भविअ चिट्ठिस्सं। एवं पि णाम विस्सामं लहेअं।।

(ही माणवे भोः। हतोऽस्मि एतस्य मृगयाशीलस्य राज्ञः वयस्यभावेन निर्विण्णः। अयं मृगः....., अयं वराहः...., इति मध्यन्दिने अपि ग्रीष्मे विरलपादपच्छायासु

---

**विदूषक** इति तल्लक्षणमाह भरतः। हास्यप्रधानवाक्येन कौतुकं वितनोति यः। नायकस्य सदा प्रीतः कथ्यते स विदूषक इति। अयञ्च नायकस्य नर्मसचिव उपनायकः। तदुक्तं–पीठमर्दो विटश्चैव विदूषक इति त्रिधा। स्यान्नर्मसचिवस्तस्य कुपितस्त्रीप्रसादक इति। अस्य च चरितं पताकाख्यप्रभृति, तदुक्तम्–"व्यापि प्रासङ्गिकं वृत्तं पताके" त्यभिधीयते। हीमाणहे[24]–शब्दः प्राकृते खेदे। तदाह भरतः–हीमाणहे भये खेदे इति। ही ही भो इति च पाठः। ही ही भोः शब्दो विस्मये। यदाह भरतः–ही ही भो विस्मयार्थे तु प्रयुञ्जीत विदूषक इति। भो हतोऽस्मि। एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन। निर्विण्णोऽसुस्थः। अत्र हेतुमाह–अयं मृगोऽयं वराह इति मध्यन्दिनेऽपि ग्रीष्मे विरलपादपच्छायासु वनराजिषु आहिण्ड्य परिक्रम्य पत्रसंकरकषायविरसानि। संकरः साङ्कर्यम्, उष्णकटुकानि पीयन्ते गिरिनदीसलिलानि। अनियतवेलञ्च उष्णोष्णम् अत्युष्णं मांसं भुज्यते।

पाठान्तरे आर्द्रार्द्रं मांसभूयिष्ठमिति यदि पाठः, तदाऽन्नमित्यर्थात्। तुरगगजानाञ्च शब्देन रात्रावपि नास्ति प्रकामं स्वप्तव्यम्। महत्येव प्रत्यूषे दास्याः पुत्रैः शाकुनिकलुब्धकैः। पाठान्तरे आमिषलुब्धैः। कर्णोपघातिना वनगमन–कोलाहलेन प्रबोध्ये। दास्याः पुत्रैरिति "षष्ठ्याऽऽक्रोशे" (पा. 6–3–21) इति षष्ठ्यलुक्। एतत् सर्वम् वैद्यकविरुद्धम्। तथा च "ग्रीष्मे न पथ्यं कटुतिक्त"मित्यादि।

---

24. हीनामहे इति 4117 इत्यत्र पठ्यते।

वनराजीषु आहिण्ड्य पत्रसंकरकषायविरसानि उष्णकटुकानि पीयन्ते गिरिनदी- सलिलानि।। अनियतवेलं च उष्णोष्णं मासं भुज्यते। तुरगगजानां च शब्देन रात्रिमपि नास्ति प्रकामस्वप्तव्यं, महति एव प्रत्यूषे दास्या:पुत्रैः शाकुनिकलुब्धैः कर्णोपघातिना वनगमनकोलाहलेन प्रबोध्ये। एतावतापि तावत्पीडा न वृत्ता, यतः गण्डस्योपरि विटकाः संजाताः। येन किल अस्मास्ववहीनेषु तत्रभवता मृगानुसारिणा आश्रमपदं प्रविष्टेन ममाधन्यतया शकुन्तला नाम कापि तापसकन्यका दृष्टा। तां प्रेक्ष्य साम्प्रतं नगरगमनस्य कथामपि न करोति। एतदेव चिन्तयतः मम अक्ष्णोः प्रभाता रजनी। तत् का गतिः। यावदेनं कृताचारपरिकर्माणं प्रियवयस्यं प्रेक्षे। एषः बाणासनहस्तः हृदयनिहितप्रियजनः वनपुष्पमालाधारी इतः एवागच्छति प्रियवयस्यः। भवतु, अङ्गामर्दविकलः भूत्वा स्थास्यामि। एवमपि नाम विश्रामं लभेय। (इति दण्डकाष्ठम् अवलम्ब्य स्थितः)

(ततः प्रविशति यथानिर्दिष्टो राजा)

**राजा**–(आत्मगतम्)

**कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि।**
**अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते।। 2–1।।**

(स्मितं कृत्वा) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विप्रलभ्यते। कुतः–

**स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया**
**यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।**

---

एतावतापि पीडा न वृत्ता पीडावृद्धिर्न वृत्तेत्यर्थः। यतो गण्डस्योपरि विटकाः संजाताः। विस्फोटक[25] विटकस्त्रिष्वित्यमरः। शङ्करस्तु देश्यां पीडिकाशब्दो विस्फोटवाचकः। गण्डस्योपरि यो गण्डः, स विस्फोटक उच्यत इत्याह, तच्चिन्त्यम्। येनास्मासु सर्वेष्ववहीनेषु पश्चात् पतितेषु तत्रभवता मृगानुसारिणा आश्रमपदं प्रविष्टेन ममाधन्यतया शकुन्तला नाम कापि तापसकन्यका दृष्टा। तां प्रेक्ष्य साम्प्रतं नगरगमनस्य कथामपि न करोति। एतदेव चिन्तयतो ममाक्ष्णोः प्रभाता रजनी। जाग्रत एव वा निर्गता इत्यर्थः। का गतिः? कः प्रकारः कर्तव्य इत्यर्थः। यावदेनं कृताचारपरिकर्माणं प्रियवयस्यं प्रेक्ष्ये। यावद्वाक्यालङ्कारे। परिकर्मप्रसाधनम्। एष बाणासनहस्तो०। बाणासनं धनुः। हृदयनिहित-प्रियजनो वनपुष्पमालाधारी इत एवागच्छति प्रियवयस्यः। भवत्वङ्गभङ्गविकलो भूत्वा तिष्ठामि। एवम् अपि विश्रामं लभे। का०।। (2-1) कामं निश्चितम्। प्रिया शकुन्तला। तु पुनरर्थे भावः। शृङ्गारचेष्टा यदि दुर्लभेव सा, तदर्थं क[थ] मुत्कण्ठ स इत्याह। अकृतेति०। सम्भोगे सति कामस्य कृतार्थता। अतादृशेऽपि मनसिजे उभयस्य नायक-नायिकयोः प्रार्थना, न त्वेकप्रार्थना। तथा च सति शृङ्गारभोगः स्यादिति। रतिं प्रीतिं करोति। पाठान्तरे रतिराकस्मिकावलोकनोद्भुतप्रीतिरुभयप्रार्थनां कुरुते। दर्शनेनानुरागजननात् प्रार्थना जायत इत्यर्थः। भावनाख्या तृतीया कामावस्थेयम्। तदुक्तम्–मुहुर्मुहुर्निः श्वसितैर्मनोरथविचिन्तनैः। नैवाशने न शयने न हृष्यति न तिष्ठति। विलास-नामकं

---

25. विस्फोटे इति 4117 इत्यत्र पठ्यते।

**मा गा इत्युपरुद्धया यदपि तत्सासूयमुक्ता सखी**
**सर्वं तत्किल मत्परायणम् अहो कामः स्वतां पश्यति।। 2-2।।**

**विदूषकः**-(तथा स्थित एव) भो राअं। ण मे हत्थो पसरदि। वाआमेत्तकेण जआवीअसि। (भो राजन्, न मे हस्तः प्रसरति। वाङ्-मात्रेण एव जाप्यसे।)

**राजा**-(विलाक्य सस्मितम्) कुतोऽयं गात्रोपघातः।

**विदूषकः**-कधं कुदो त्ति। सअं जेव अच्छिं भञ्जिअ अस्सुकारणं पुच्छसि। (कथं... . कुतः इति। स्वयमेवाक्षिं भङ्क्त्वा अश्रुकारणं पृच्छसि।)

**राजा**-न खल्ववगच्छामि। भिन्नार्थमभिधीयताम्।

**विदूषकः**-जं वेदसो खुज्जस्स लीलं विडम्बेदि तं किं अत्तणो पहावेण अध णदीवेअस्स। (यद्वेतसः कुब्जस्य लीलां विडम्बयति तत्किमात्मनः प्रभावेण अथवा नदीवेगस्य।)

**राजा**-नदीवेगस्तत्र कारणम्।

**विदूषकः**-ममावि भवं। (ममापि भवान्।)

**राजा**-कथमिव।

**विदूषकः**-जुत्तं णाम एदं जं तए रज्जकज्जाइं तादिसं च अक्खलिदपदं पदेसं उज्झिअ वणचरवित्तिणा भविदव्वं ति। किं एत्थ मन्तीअदु। अहं उण वम्हणो पच्चहं सावदाणुसरणेहिं संखोहिदसंधिबन्धणाणं अत्तणो अङ्गाणं अणीसो म्हि। ता पसीद। एक्काहं दाव

---

प्रतिमुख-सन्ध्यङ्गम् इदम्। तदुक्तं-समीहा राजभोगार्था विलास इति कथ्यत इति। प्रार्थयिता याचकः विप्रलभ्यते प्रतार्यते कामेनेत्यर्थात्।

स्निग्धं०।। (2-2) तया शकुन्तलया सर्वत्र सम्बन्धनीयम्। नितम्बगौरवेण च यद्विलासादिव मन्दं गतम्। मा गच्छेति च कृतगतिव्याघातया यत् सखी सकोपं व्याहता, तत् सर्वम् मत्परायणम्, मद्विषयकं, मदर्थं कृतम् एतदिति। अहो आश्चर्यम्। कामः स्वतामात्मीयतां, मत्कृतमेतत् सर्वमिति पश्यति। रतिं(तिः) भावजा स्निग्धेयं दृष्टिः। तदुक्तं भरतेन-सहर्षा साभिलाषा च मधुरान्तर्विकासिनी। स्मेरभावा च या[26] दृष्टिः स्निग्धा रत्याख्या भावजेति।। भो राजन्, न मे हस्तः प्रसरति। अतो वाङ्मात्रेणैव जाप्यसे। कथं, कुत इति। स्वयमेवाक्षिणी भित्वौश्रुकारणं पृच्छसि। भिन्नार्थं स्फुटार्थम्। यद्वेतसः कुब्जस्य लीलां[27] सादृश्यं विडम्बयति तत् किमात्मनः प्रभावेण, अथवा नदीवेगस्य। अथशब्दः प्रकृते पक्षान्तरे। ममापि भवान्। तदेव व्याकरोति युक्तं नामेति। यत्त्वया राज्यकार्याणि तादृशञ्चास्खलितपदं प्रदेशं उज्झित्वा त्यक्त्वा वनचरव(वृ)त्तिना भवितव्यमिति। किमत्र मन्त्र्यताम्। अहं पुनर्ब्राह्मणः प्रत्यहं श्वापद-विसरणैः संक्षोभित-सन्धिबन्धनानामात्मनोऽङ्गानाम् अनीशोऽस्मि। तत् प्रसीद, एकाहमपि तावद् विश्राम्यतु भवान्।।

---

26. त्वया इति 4118 इत्यत्र पठ्यते।
27. कुब्जार्थस्य इति 4117 इत्यत्र पठ्यते।

विस्समीअदु। (युक्तं नाम एतत् यत् त्वया राजकार्याणि तादृशं च अस्खलितपदं प्रदेशमुज्झित्वा वनचरवृत्तिना भवितव्यमिति। किमत्र मन्त्रयतामहं पुनः ब्राह्मणः प्रत्यहं श्वापदानुसरणैः संक्षोभितसन्धिबन्धनामात्मनः अङ्गानामनीशोऽस्मि। तत्प्रसीद, एकाहम् तावद्विश्रमायताम्।)

**राजा**–(स्वगतम्) अयमेवमाह। ममापि कण्वसुताम् अनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः। तथा हि–

**न नमयितुमधिज्यमुत्सहिष्ये धनुरिदमाहितसायकं मृगेषु।**
**सहवसतिमुपेत्य यैः प्रियायाः कृत इव लोचनकान्तिसंविभागः।। 2–3।।**

**विदूषकः**–(राजानमवलोक्य) अत्थभवं किं पि हिअए कदुअ मन्तेदि। अरण्णे क्खु मए रुदिदं। (अत्रभवान् किमपि हृदये कृत्वा मन्त्रयते। अरण्ये खलु मया रुदितम्।)

**राजा**–(सस्मितम्) किमन्यत्। अनतिक्रमणीयं सुहृद्वाक्यमिति स्थितोऽस्मि।

**विदूषकः**–(सपरितोषम्) तेण हि चिरं मे जीव। (तेन हि चिरं मे जीव।) (इत्युत्थातुमिच्छति।)

**राजा**–तिष्ठ, शृणु मे सावशेषं वचः।

**विदूषकः**–आणवेदु भवं। (आज्ञापयतु भवान्।)

**राजा**–विश्रान्तेन भवता ममान्यस्मिन्ननायासे कर्मणि सहायेन भवितव्यम्।

**विदूषकः**–किं मोदअखज्जिआए। (किं मोदकखादिकायाम्।)

**राजा**–यद्वक्ष्यामि।

**विदूषकः**–गहिदो खणो। (गृहीतः क्षणः।)

**राजा**–कः कोऽत्र भोः

(प्रविश्य) **दौवारिकः**–आणवेदु भट्टा। (आज्ञापयतु भर्ता।)

**राजा**–रैवतक, सेनापतिस्तावदाहूयताम्।

**दौवारिकः**–तधा। (इति निष्क्रम्य पुनः सेनापतिना सह प्रविश्य), एदु एदु अज्जो।

---

न [नमयितुम्०]। (2–3) आहितसायकमर्पितशरम्। (शाखाभोग 4118) संविभागोऽर्धवण्टनम्। अत्रभवान् किमपि हृदये कृत्वा मन्त्रयते। अरण्ये खलु मया रुदितम्, कोऽपि न शृणोतीति भावः।

तेन हि चिरंजीव। आज्ञापयतु भवान्। किं मोदकखादिकायाम्। गृहीतः क्षणः। अवधानं कृतमित्यर्थः। निर्व्यापारस्थितौ क्षण इत्यमरः।। क्षण उत्सव इत्यनन्तार्णवः।

गृहीतः प्रणय इति शङ्करः पठति।

एस आलावदिण्णकण्णो भट्टा इदो ज्जेव चिट्ठदि। उवसप्पदु णं अज्जो। (तथा एतु एतु आर्यः। एषः आलापदत्तकर्णः भर्ता इतः एव तिष्ठति। उपसर्पत्वेनम् आर्यः।

**सेनापतिः**–(राजानमवलोक्य स्वगतम्) कथं दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव संवृत्ता। तथा हि देवः–

**अनवरतधनुर्ज्यास्फालनक्रूरकर्मा**
**रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः।**
**अपचितमपि गात्रं व्यायतत्वादलक्ष्यं**
**गिरिचर इव नागः प्राणसारं बिभर्ति।। 2–4।।**

(उपगम्य) जयति जयति स्वामी। स्वामिन्। गृहीतमृगप्रचारसूचितश्वापदम् अरण्यम्। तत्किमन्यद् अनुष्ठीयताम्।

**राजा**–भद्रसेन, भग्नोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन।

**सेनापतिः**–(अपवार्य) सखे माधव्य, दृढप्रतिज्ञो भव। अहं तावत्स्वामिनश्चित्तम् अनुवर्तिष्ये। (प्रकाशम्) देव, प्रलपत्वेष वैधेयः। ननु प्रभुरेव निदर्शनम्। पश्यतु देवः।

**मेदश्छेदकृशोदरं लघु भवत्युत्साहयोग्यं वपुः**
**सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।**
**उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले**
**मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः।। 2–5।।**

---

आज्ञापयतु भर्ता। भर्तेति सार्वभौमस्तु वाच्यः परिजनैः सदेति भरतः। यद्वा भट्टारके भर्तेति भाषाभेदः। रैवतकेति दौवारिकनाम। एतु एत्वार्य्यः, एष आलापदत्तकर्णो भट्टारक इत एव तिष्ठति। तस्माद् उपसर्पत्वेनमार्य्यः। देवो राजा।

अनवरतधनु०। (2–4) धनुर्ज्यारूढप्रतिपत्यर्थम्। धनुःशब्दः क्रूरं कठिनं कर्म यस्य। शङ्करस्तु क्रूरपूर्वमिति पठित्वा पूर्वः पूर्वभाग इत्याह। नेकैर्न त्वनेकैरित्यर्थत्वेन सहिष्णुतोक्तिः। क्षीणमपि व्यायतत्वात् कृतव्यायामत्वादलक्षणीयम्। व्यायतत्त्वाद् दैर्घ्यादिति शङ्करदुर्बोधः। प्राणः सारो यत्र नागो हस्ती जयतीत्याशंसायां लोट्। जयतेरनभिधानादित्युत्वप्रतिषेधः।। प्रचारो गतिः, गृहीतमृगप्रचारं ज्ञातमृगपथं सूचितव्याघ्रादिकञ्चेति शङ्करः। अपवादिना निन्दकेन निषेधकेन वा। माधव्येति[28] विदूषकनाम। अपवार्येति विदूषकम् अर्थाद्विदूषकात् संगोप्यान्यत्र प्रकाशं वक्तीत्यर्थः। तदुक्तं तद्भवेदपवारितं रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते इति दर्पणः। वैधेयो मूर्खः।

मेद०। (2–5) मृगया व्यसनं मिथ्या वदन्ति, अर्थाज्जनाः। हि यतः। ईदृश आनन्दः कुतः, न कुतोऽपीत्यर्थः। यद्वा हिरवधारणे। मिथ्यैवेत्यर्थः। हेतुमाह मेद० इति शरीरस्थूलताकारको धातुभेदो मेदः। अत एव लघु, अत एवोत्साहयोग्यम्। सत्त्वानां सिंहादीनाम्। सिध्यन्ति सफला भवन्ति।

---

28. माध्यदेति इति 4117 इत्यत्र पठ्यते।

**विदूषकः**–(सरोषम्) अवेहि रे उच्छाहइत्तआ अवेहि। अत्थभवं पइदिं आवण्णो। तुमं दाव दासीएपुत्तो अडईदो अडइं आहिण्ड जाव सिआलमिअलोलुवस्स कस्स वि जुण्णरिच्छस्स मुहे णिवडिदो होसि। (अपेहि रे उत्साहयितः, अपेहि। अत्रभवान् प्रकृतिमापन्नः, त्वं तावद्दास्याःपुत्रः अटवीतः अटवीम् आहिण्ड यावत् शृगालमृगलोलुपस्य कस्यापि जीर्णर्क्षस्य मुखे निपतितः भवसि।)

**राजा**–भद्रसेन, आश्रमसन्निकृष्टे स्थितोऽस्मीति वचस्ते नाभिनन्दामि। अद्य तावत्

**गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं**
**छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।**
**विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले**
**विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः।। 2–6।।**

**सेनापतिः**–यथा प्रभविष्णवे रोचते।

**राजा**–तेन हि निवर्तय पूर्वगतान्धनुर्ग्राहिणः। यथा च सैनिकास्तपोवनं नाभिरुन्धन्ति दूरात् परिहरन्ति च तथा निषेद्धव्याः। पश्य–

**शमप्रधानेषु तपोवनेषु गूढं हि दाहात्मकमस्ति तेजः।**
**स्पर्शानुकूला अपि सूर्यकान्तास्ते ह्यन्यतेजोऽभिभवाद् दहन्ति।। 2–7।।**

**सेनापतिः**–यथाज्ञापयति स्वामी।

---

व्यसनं विपदि भ्रंशे दोषे कामजः कोपज इत्यमरः। काव्यलिङ्गमलंकारः। अप्रस्तुतप्रशंसेति शङ्करः। अपेहि रे उत्साहशालिन अपेहि। मतुबर्थे हेतुकशब्दः। हेतुक इति तु व्याख्यानमनाकरम्। अत्रभवान् श्लाघ्यः राजेत्यर्थात्। प्रकृतिमापन्नः। त्वं तावद् दास्याः पुत्रोऽटवीतोऽटवीमाहिण्ड भ्रम, यावत् शृगालमृगलोलुपस्य कस्यापि जीर्णऋक्षस्य भल्लुकस्य मुखे निपतितोऽसि।।

गाह०।(2-6)।निपानेति कूपसमीपजलाशयजलं मुहुस्ताडितमिति जातिरलंकारः।कदम्बकं समूहः। भुक्तस्य पुनरुदगीर्य चर्वणं रोमन्थः। अभ्यस्यतु पौनःपुन्येन करोतु। पूर्वन्तु कदाचिदेव रोमन्थ इति भावः। कुलस्यापि कुटुम्बघटनमकुतोभयता लक्षणम्। विश्रब्धैः निःशङ्कैः। पल्वलम् अल्पसरः। विश्रामं लभतां पशुहिंसादिकर्मण इत्यर्थः। आहावस्तु निपानं स्याद् उपकूपजलाशय इत्यमरः। अत्र महिषा इत्यादिना प्रथमान्तलोपक्रमात् वराहपतिभिरित्यनेन तत्त्यागात् पुनर्धनुरित्यनेन च तद् आदानान्माधुर्य व्यत्ययेन प्रक्रमभङ्ग इति। विश्रब्धा रचयन्तु कोलपतयो मुस्ताक्षति पल्वले इति वरमत्र पाठ इति प्राज्ञः। शङ्करस्तु न ह्यत्र प्रथमान्तेनोपक्रमः, किन्तु कर्तृमात्रनिर्देशः। स चाति हि तत्वेऽनति हि तत्वे च तुल्य एवेति समाधानमाह। अत्र वराहपतीनां परिवृत्य प्रभावचतुराणामपि स्वतन्त्रकर्तृतामात्रमपि धर्मव्यापारावसरे नासीदिति प्रतिपादनाय तृतीयेति तु केचित्।।

शम० (2-7)।। हि हेतौ दृष्टान्तः। अर्थान्तरन्यास इति शङ्करः। भो उत्साहशालिन निष्क्राम। निष्क्राम उत्साहहेताविति शङ्करस्याज्ञानम्। अशून्यं कुरु। द्वारस्थो भवेत्यर्थः। यन्महाराज आज्ञापयति।

**विदूषकः**–भो उच्छाहइत्तआ। णिक्कम णिक्कम। (भोः उत्साहितः, निष्क्राम निष्क्राम।)

(सेनापतिर्निष्क्रान्तः)

**राजा**–(परिजनमवलोक्य) मृगयावेषमपनयन्तु भवन्तः। रैवतक, त्वमपि स्वनियोगमशून्यं कुरु।

**रैवतकः**–जं महाराओ आणवेदि। (यत् महाराजः आज्ञापयति।) (इति निष्क्रान्तः)

**विदूषकः**–किदं भवदा णिम्मक्खिअं। ता इमस्सिं पादवच्छाआविरइदविदाणसणाधे सिलादले उवबिसदु भवं, जाव अहं पि सुहासीणो होमि। (कृतं भवता निर्मक्षकम्। तदेतस्मिन् पादप-च्छाया-विरचितवितानसनाथे शिलातले उपविशतु भवान्।यावदहमपि सुखासीनः भवामि।)

**राजा**–गच्छाग्रतः।

**विदूषकः**–एदु एदु भवं। (एतु एतु भवान्।) (उभौ परिक्रम्योपविष्टौ।)

**राजा**–सखे माधव्य, अनवाप्तचक्षुःफलोऽसि, येन त्वया द्रष्टव्यानां परं न दृष्टम्।

**विदूषकः**–णं भवं जेव मे अग्गदो वट्टदि। (ननु भवानेव मे अग्रतः वर्तते।)

**राजा**–सर्वः खलु कान्तमात्मानं पश्यति। अहं तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि।

**विदूषकः**–(स्वगतम्) भोदु। ण से पसरं वड्ढाइस्सं। (प्रकाशम्) भो, जदो सा तावस-कण्णआ अणब्भत्थणीआ, तदो ताए किं दिट्ठाए। (भवतु, नास्य प्रसरं वर्धयिष्यामि। भोः यतः सा तापसकन्यका अनभ्यर्थनीया, ततः तया किं दृष्ट्या।)

**राजा**–मूर्ख,

**निराकृतनिमेषाभिर्नेत्रपङ्क्तिभिरुन्मुखः ।**
**नवामिन्दुकलां लोकः केन भावेन पश्यति।।2–8।।**

न च परिहार्ये वस्तुनि दुःषन्तस्य मनः प्रवर्तते।

---

कृतं भवता निर्मक्षिकं निर्जनमित्यर्थः। तदेतस्मिन् पादपच्छायाविरचित वितानसनाथे शिलातले उपविशतु भवान् यावदहमपि सुखासीनो भवामि। वितानो यज्ञ उल्लोचे विस्तारे पुंनपुंसकमिति मेदिनी। एतु एतु भवान्। ननु भवानेव ममाग्रतो वर्तते। अमेवेत्यनेन पूर्वकथनं व्यज्यते। ललामं भूषणम्। भूषावाजिप्रचारेषु ललामञ्च, ललाम चेति शाश्वतः।। भवतु नास्य प्रसरं प्रश्रयं वर्द्धयिष्यामि। भो यतः सा तापसकन्यका अनभ्यर्थनीया ततस्तया किं दृष्ट्या।।

नि०। (2-8)। भावेनाभिप्रायेण नवां प्रकाशकरणाक्षमां केवलं सौन्दर्यावलोकनसुखेन जनस्तामवलोकयति तद्वदत्रापीति भावः। अप्रस्तुतप्रशंसा। समासोक्तिरिति भावः शङ्करः। तत्कथय। अपरिवार्यत्वमाह।

**विदूषकः**–ता कधेहि। (तत्कथय।)

**राजा–**

**ललिताप्सरोभवं किल मुनेरपत्यं तदुज्झिताधिगतम्।**
**अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम्।। 2–9।।**

**विदूषकः**–(विहस्य) भो, जधा कस्स वि पिण्डखजूरेहिं उव्वेइदस्स तिन्तिडिआए सद्धा भोदि तधा अन्तेउरइत्थीरदणपरिभोइणो भवदो इअं पत्थणा।

(भोः यथा कस्यापि पिण्डखर्जूरैः उद्वेजितस्य तिन्तिडिकायां श्रद्धा भवति, तथा अन्तःपुरस्त्रीरत्नपरिभोगिनः भवतः इयं प्रार्थना।)

**राजा**–सखे, न तावदेनां पश्यसि येन त्वमेवंवादी।

**विदूषकः**–तं खु रमणीअं णाम, जं भवदो वि विम्हअं उप्पदेदि। (तत्खलु रमणीयं नाम, यत् भवतः अपि विस्मयम् उत्पादयति।)

**राजा**–वयस्य किं बहुना।

**चित्ते निवश्य परिकल्पितसर्वयोगा–**
**न्रुपोच्चयेन महता मनसा कृता नु।**
**स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे**
**धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः।। 2–10।।**

**विदूषकः**–सव्वधा पच्चादेसो क्खु सा रूववदीणं। (सर्वथा प्रत्यादेशः खलु सा रूपवतीनाम्।)

---

ललितेति०। (2–9) किल निश्चये। प्रसिद्धावित्यन्यः। तदुज्झिताधिगतं तया त्यक्तमधिगतं लब्धं मुनिना। अर्कस्य रवेरुपरि च्युतं पतितं शिथिलं वृन्ताच् च्युतम्। उज्झितसाम्यार्थमिदम्। नवमालिका अतिकोमलपुष्पभेदः। वाक्यार्थोपमा कुव्याख्यात्रोपेक्षिता।।

भो यथा पिण्डखर्जुरैः खर्जूरभेदैरुद्वेजितस्य कस्यापि तिन्तितिकायां श्रद्धा भवति तथा स्त्रीरत्नपरिभोगिनो भवत इयं प्रार्थना। तत् खलु रमणीयं नाम यद्भवतोऽपि विस्मयमुत्पादयति।।

चित्ते०।(2–10)।सा शकुन्तला अपरा द्वितीया स्त्रीरत्नसृष्टिर्लक्ष्मीसृष्टिर्मे प्रतिभाति स्फुरति। यद्वा अन्या स्त्रीश्रेष्ठसृष्टिः प्रतिभाति। अपरा न विद्यते श्रेष्ठा यस्या इत्यमरः। "जगदानन्दिनी पद्मा स्त्रीरत्नम् अच्युत–प्रिये"ति कोषः। जातौ जातौ यदुत्कृष्टं तद्धि "रत्नं" प्रचक्षते इति च। असम्भावनाव्युदासमाह–धातुरिति स्रष्टुर्विभुत्वं सृष्टि–नैपुण्यं तस्याश्च वपुर्जगद्विलक्षणमिति भावः। अनुचिन्त्याकलय्य अत्राकलनस्फुरणयोरेक एव नृपः कर्तेति भिन्नकर्तृत्वभ्रमो न कार्यः। अन्यतो वैलक्षण्यमाह–कीदृशी, चित्ते निवेश्य प्रवेश्य ध्यात्वेति यावत्। परिकल्पितः सर्वेषां करचरणादीनां योगो यत्र परिचिन्त्य कृत इत्यर्थः। सदुपयोगाद् जनितप्राणसम्बन्ध इति शङ्करः। तथापि सृष्टस्य निश्चितकरसम्पर्काद् भवत्येव किञ्चिद् वैसादृश्यमित्याह मनसा चेतसा कृता नु विभुत्वान्मनसः सर्ज्जने भवत्यन्यतो वैलक्षण्यमिति। अत्र करणं रूपोच्चयेन महतेति पूर्वत्रापि सम्बन्धनीयमिदम्।

**राजा**–इदं च मे मनसि वर्तते।

**अनाघ्रातं पुष्पं किसलयमलूनं कररूहै-**
**रनामुक्तं रत्नं मधु नवमनास्वादितरसम्।**
**अखण्डं पुण्यानां फलमिव च तद्रूपमनघं**
**न जाने भोक्तारं कमिह समुपस्थास्यति भुवि।। 2–11।।**

**विदूषकः**–तेण हि लहुं लहुं गच्छदु भवं मा दाव सा तवस्सिणी कस्स वि इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे णिवडिस्सदि। (तेन हि लघु लघु गच्छतु भवान्। मा तावत्सा तपस्विनी कस्यापि इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते निपतिष्यति।)

**राजा**–परवती खलु तत्रभवती न च सन्निहितगुरुजना।

**विदूषकः**–अध तुह उवरि कीदिसो उण से चित्तराओ। (अथ तवोपरि कीदृशः पुनः अस्याः चित्तरागः।)

**राजा**–वयस्य, स्वभावादप्रगल्भास्तपस्विकन्यकाः। तथापि

**अभिमुखे मयि संवृतमीक्षितं हसितमन्यनिमित्तकथोदयम्।**
**विनयवारितवृत्तिरतस्तया न मदनो विवृतो न च संवृतः।। 2–12।।**

---

शङ्करस्तु–तथापि मनसो नीरूपतया कथं तादृशरूपसम्पत्तिस्तत्राह। रूपोच्चयेन कृतेत्यनुषङ्गः। तत्रापि विशेषयति महतेत्याह। अन्ये तु मनसा कथमेवं कृतेत्याकाङ्क्षायां चित्ते निवेश्येति हेतुगर्भविशेषणम्। तेन द्विरुक्तिरित्याहुः। उत्प्रेक्षेयम्। सर्वथा प्रत्यादेशः खण्डनं खलु सा रूपवतीनां।।

अनाघ्रातं०।।(2–11) अनाघ्रातमित्यनेनातिरमणीयत्वं गम्यते। एवमग्रेऽपि बोद्धव्यं पुष्पमिति सकलजनानन्दकारित्वात्। एवमग्रेऽपि यथोचितमुदाहरणीयम्। अनामुक्तं अपरिहितं आकराद् आनीतमात्रमित्यर्थः। मधु क्षौद्रम् अत्यन्तं संपूर्णम्। क्वचित् कदाचित् सुकृतविपाकोऽपि दुःखमिति तत् स्यादित्याह। अनघं प्रत्यवायहेतुरहितं तद्रूपं शकुन्ता(न्तला)सौन्दर्यम्। अत्र पूर्वार्द्धे अधिकारूढ–वैशिष्ट्यरूपकालङ्कारः। अधिकारूढवैशिष्ट्यरूपकं यत्तु देवतदिति लक्षणात् परार्द्धे चोपमेत्युभयसंसृष्टिः। इयञ्चतुर्थी कामावस्था। तदुक्तं चतुर्थे गुणकीर्तनमिति।

तेन हि लघु लघु अतिशीघ्रं परिणयतु भवान् शकुन्तलामर्थात् बीजमाह। मा तावत् सा तपस्विनी अनुकम्प्या कस्यापि इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते निपतिष्यति। तपस्वी तापसे चानुकम्पायामिति मेदिनी। शङ्करमते मा तावदिति नास्ति। परवती पराधीना तर्हि गुरुरेव नान्यस्मै दास्यते। यद्वा गुरुरेव प्रार्थ्यतामित्याह "न चे"ति। अथ प्रश्ने, भवन्तमन्तरेण भवन्निमित्तम्। भवन्मध्य इति शङ्करदुर्बोधः। भवोपवीति(?) पाठान्तरम्। कीदृशः पुनस्तस्याश्चित्तरागः। अन्तरमवकाशावधि परिधानान्तर्द्धि भेद तादात्म्य इत्यमरः।।

अ०। (2–12)। हसितं प्रौढस्मितं, किञ्चित् लक्षितदन्तञ्च हसितन्त्वभिधीयत इति भरतः। किं नु खलु दृष्टमात्रेणैव भवतोऽङ्कमारोहतु।

**विदूषकः**–किं णु क्खु दिट्टमेत्तस्स ज्जव भवदो अङ्कं आरोहदु। (किन्नु खलु दृष्टमात्रस्यैव भवतः अङ्कमारोहतु।)

**राजा**–सखीभ्यां मिथःप्रस्थाने पुनस्तत्रभवत्या मयि भूयिष्ठमाविष्कृतो भावः। तथा हि

**दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे**
**तन्वी स्थिता कतिचिदेव पदानि गत्वा।**
**आसीद्विवृत्तवदना च विमोचयन्ती**
**शाखासु वल्कलमसक्तमपि द्रुमाणाम्।। 2–13।।**

**विदूषकः**–गहिदपाधेओ किदो सि ताए। ता अणुरत्तं तवोवणे तुमं तक्केमि। (गृहीतपाथेयः कृतः असि तया। तदनुरक्तं तपोवने त्वां तर्कयामि।)

**राजा**–सखे, चिन्तय तावत्केनापदेशेन पुनराश्रमपदं गच्छामः।

**विदूषकः**–को अवरो अवदेसो। णं भवं राआ। (कः अपरः अपदेशः। ननु भवान् राजा।)

**राजा**–ततः किम्।

**विदूषकः**–णीवारछट्ठभाअं मे तावसा उवहरन्तु त्ति। (नीवारषष्ठभागं मे तापसाः उपहरन्तु इति।)

**राजा**–मूर्ख, अन्यमेव भागमेते तपस्विनो निर्वपन्ति यो रत्नराशीनपि विहायाभिनन्द्यते। पश्य–

**यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम्।**
**तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः।। 2–14।।**

(नेपथ्ये) हन्त, सिद्धार्थौ स्वः।

**राजा**–(आकर्ण्य) अये, धीरप्रशान्तः स्वरः। तत्तपस्विभिर्भवितव्यम्।

---

दर्भ०। (2-13)। काण्डमवसरः। अनवसर इत्यर्थः। अनिमित्तमिति शङ्करः। विवृत्तवदना विवृत्तमुखी मदवलोकनायेति भावः। असक्तम् अलग्नम् अनेनानुरागव्यक्तिरुक्ता। तदुक्तम्– आकारेणात्मनो भावं या नारी तु प्रकाशयेत्। क्षिप्रमेवानुरक्ता सा प्रथमे चापि दर्शने इति। समाधिरलंकारः। बीजस्यालम्बनं यत्तु स समाधिरिति स्मृत इति।

गृहीतपाथेयस्तया कृतोऽसि। पाथेयः सम्बलं, तस्मादनुरक्तं तपोवने त्वां तर्कयामि। अपदेशो व्याजः। कोऽन्योऽपदेशो, ननु भवान् राजा। नीवारषष्ठभागं मे तापसा उपहरन्त्विति। बीजमाह –

यदिति०। (2-14)। उत्तिष्ठति मिलति उपोऽनूर्द्ध चेष्टायामित्यात्मनेपदं न चेष्टाया अभावात्। ग्रामाच्छतमुत्तिष्ठतीति प्रत्युदाहृतं दुर्गटीकायां वर्णेभ्यो ब्राह्मणादिभ्यः। षड्भागं षष्ठभागं पूरणप्रत्ययलोपात् हि हेतौ। हन्त हर्षे अनायासेनैव नृपदर्शनात् कृतार्थौ भवावः आवामिति शेषः। धीरो धैर्यशाली प्रशान्तोऽनुत्कण्ठः।

(प्रविश्य) **दौवारिकः**–जअदु जअदु भट्टा। एदे क्खु दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा।

**राजा**–अविलम्बितं प्रवेशय।

**दौवारिकः**–जं भट्टा आणवेदि। (इति निष्क्रम्य ऋषिकुमारकाभ्यां सह प्रविश्य च) इदो इदो एध। (यद् भर्ता आज्ञापयति। इतः इतः एतम्।)

**एकः**–(राजानमवलोक्य) अहो, दीप्तिमतोऽपि विश्वसनीयता वपुषः। अथवा उपपन्नमेवैतद् ऋषिकल्पे राजनि। कुतः–

**अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये**
**रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति।**
**अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः**
**पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः।। 2–15।।**

**द्वितीयः**–सखे, अयं स बलभित्सखो दुःषन्तः।

**प्रथमः**–अथ किम्।

**द्वितीयः**–तेन हि

**नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-**
**मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति।**
**आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यै-**
**रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे।। 2–16।।**

**उभौ**–(उपेत्य) विजयस्व राजन्।

**राजा**–(आसनादुत्थाय) अभिवादये भवन्तौ।

---

जयति जयति भर्ता। एतौ खलु द्वावृषिकुमारकौ प्रति(ती)हारभूमिं द्वारमुपस्थितौ। यद् भर्ता आज्ञापयति। इत इत एतम् आगच्छतम्। विश्वेति सौम्यताम्।।

अ०।(2–15)। सर्वभोगार्हे गार्हस्थ्ये। चारणद्वन्द्वं गन्धर्वमिथुनं, यद्वा दिगन्ते ये यशः प्रापयन्ति ते चारणाः। मागधभेदाः तन्मिथुनम्। एतेन राज्ञः परिजनस्यापि निर्विघ्नं अर्द्धगमनागमनमुक्तमिति भावमाह शङ्करः। पुण्यः पुण्यहेतुत्वात् कीर्तिं स्वर्गफलमाहुरिति दर्शनात् व्यतिरेकालंकारः।।

नैतदिति०।(2–16) उदधीति आसमुद्रादित्यर्थः। नगरेति परिघस्यातिस्थौल्यदैर्घ्ये गम्यते भुनक्तिं पालयति। हेतुमाह। हि यस्मात् युद्धेष्वस्य धनूषि इन्द्रस्य च वज्रे देवा विजयमभिलषन्ति। कीदृशाः, दैत्यैः सह कृतवैराः। शङ्करस्तु यच्च विजयमभिलषन्ति तदप्यस्योचितमित्यर्थः। अत एव दीपकालंकार इत्याह। अपवार्य राजानम् अर्थात्। ऋषिकुमारकावित्यर्थः इत्यन्यस्तद्विचार्यम्। एष इदानीन्तेऽनुकूलो गलहस्तः। यद्देव आज्ञापयति।।

**ऋषी**–स्वस्ति भवते। (इति फलान्युपनयतः)

**राजा**–(सप्रणामं प्रतिगृह्य) आगमनप्रयोजनं ज्ञातुमिच्छामि।

**ऋषी**–विदितो भवानिह स्थितस्तपस्विभिस्ते च भवन्तमभ्यर्थयन्ते।

**राजा**–किमाज्ञापयन्ति।

**ऋषी**–तत्रभवतः कुलपतेरसांनिध्याद्रक्षांसि नस्तपोविघ्नमुत्पादयन्ति। तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति।

**राजा**–अनुगृहीतोऽस्मि।

**विदूषकः**–(अपवार्य) अअं दाणिं दे अणुऊलो गलहत्थो। (अयम् इदानीं ते अनुकूलः गलहस्तः।)

**राजा**–रैवतक, उच्यतामस्मत्सारथिः सबाणकार्मुकं रथमुपस्थापयेति।

**रैवतकः**–जं देवो आणवेदि। (यद् देव आज्ञापयति।) (इति निष्क्रान्तः)

**ऋषी**–

**अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि।**
**आपन्नाभयसत्त्वेषु दीक्षिताः खलु पौरवाः।। 2–17।।**

**राजा**–गच्छतां भवन्तौ। अहमप्यनुपदमागत एव।

**ऋषी**–विजयस्व। (इति निष्क्रान्तौ)

**राजा**–माधव्य, अप्यस्ति ते शकुन्तलादर्शनं प्रति कुतूहलम्।

**विदूषकः**–पढमं अपरिबाधं आसि। संपदं रक्खसवुत्तन्तेण सपरिबाधं। (प्रथमम् अपरिबाधमासीत्। साम्प्रतम् राक्षसवृत्तान्तेन सपरिबाधम्।)

**राजा**–मा भैषीः, ननु मत्समीप एव वर्तिष्यसे।

**विदूषकः**–एसो क्खु तुह चक्करक्खी भूदो म्हि। (एषः खलु तव चक्ररक्षी भूतोऽस्मि।)

(प्रविश्य) **दौवारिकः**–सज्जो रधो भट्टिणो विजअपत्थाणं अवेक्खदि। एसो उण णअरादो देवीणं सआसादो करभओ आअदो। (सज्जः रथः भर्तुः विजयप्रस्थानमपेक्षते। एषः पुनः नगरात् देवीनां सकाशात् करभक आगतः।)

---

अनु०।(2–17)।पूर्वपुरुषाणां।सदृशे त्वयि।सर्वेषामुपकारिणीति पाठः शङ्करमतेन समीचीनः। युक्तरूपं योग्यम्। आपन्न आपत् प्राप्तः स्यादित्यमरः। अभयमेव सत्रं यज्ञः। दीक्षिता गृहीतव्रताः कृतप्रतिज्ञा इत्यर्थः। खलु यतः।।

अनुपदं पश्चात्। प्रथममपरिबाधमविघ्नमासीत्, सांप्रतं राक्षसनामग्रहणेन सपरिबाधं कुतूहलमित्यनुषङ्गः। सपरिहासमाह–एष तव चक्ररक्षी भूतोऽस्मि। सज्जो रथो भर्तुर्विजय-प्रस्थानमपेक्षते।

**राजा**–(सादरम्) किमार्याभिः प्रेषितः।

**दौवारिकः**–अध इं। (अथ किम्।)

**राजा**–तेन हि प्रवेश्यताम्।

**दौवारिकः**–(निष्क्रम्य पुनः करभकेण सह प्रविश्य) करभअ। एसो भट्टा उवसप्पदु भवं। (करभक, एषः भर्ता। उपसर्पतु भवान्।)

**करभकः**–(उपसृत्य प्रणम्य च) जअदु जअदु भट्टा। देवीओ विण्णवेन्ति। (जयतु जयतु भर्ता। देव्यः विज्ञापयन्ति।)

**राजा**–किमाज्ञापयति।

**करभकः**–आगामिचदुट्ठदिअसे पुत्तपिण्डपारणो णाम उववासो भविस्सदि। तत्थ दीहाउणा अवस्सं अम्हे संम्भाविदव्वाओ त्ति। (आगामिचतुर्थदिवसे पुत्रपिण्डपालनो नाम उपवासः भविष्यति। तत्र दीर्घायुषा अवश्यं वयं सम्भावितव्याः इति।)

**राजा**–इतस्तपस्विकार्यमितो गुरुजनाज्ञा। उभयमप्यनतिक्रमणीयम्। तत्किमत्र प्रतिविधेयम्।

**विदूषकः**–(विहस्य) भो, तिसङ्कू विअ अन्तरा चिट्ठ। (भोः त्रिशङ्कुः इव अन्तरा तिष्ठ।)

**राजा**–सत्यमाकुलीकृतोऽस्मि।

**कृत्ययोर्भिन्नदेशत्वाद् द्वैधीभवति मे मनः।**
**पुरः प्रतिहतं शैले स्रोतः स्रोतोवहं यथा।।2–18।।**

(विचिन्त्य) सखे, त्वमार्याभिः पुत्र इव गृहीतः। स भवान् इतः प्रतिनिवृत्य तपस्विकार्यव्यग्रताम् अस्माकं निवेद्य, तत्रभवतीनां पुत्रकार्यमनुष्ठातुमर्हति।

---

एष पुनर्नगराद् देवीनां सकाशात् करभक आगतः। आर्याभिर्मातृभिः। अथ किं बाढम्। एष भर्ता उपसर्पतु भवान्। जयति जयति भर्ता। देव्य आज्ञापयन्ति।

आगामिचतुर्थदिवसे पुत्रपिण्डपालना नामोपवासो भविष्यति। पिण्डपर्युपासन इति शङ्करः पठति। पुत्रपिण्डपालनं पुत्रपुष्टिप्रदं व्रतम्, "पुत्रराज" इति ख्यातम्। पिण्डो बले देहमात्रे निवापे च निगद्यते इति मेदिनी। अत्र दीर्घायुषा त्वयावश्यं वयं सम्भावयितव्या इति।।

विहस्येति।। मधुरस्वनं विहसितमिति भरतः। भोस्त्रिशङ्कुरिवान्तरा मध्ये तिष्ठ। त्रिशङ्कु–कथा प्रसिद्धेव। व्याहरनामा नाट्यालंकारोऽयम्। तदुक्तम्–

साकूतं सावलेपञ्च यद्वाक्यं हास्यलेशतः।
प्रत्यक्षार्थतया रूढं व्याहार इति कीर्तितः।।

कृत्य०। (2–18)। कृत्ययोः कार्ययोः। स्रोतोवहं नदीसम्बन्धिस्रोतः प्रवाहः। उपमा।।

विदूषकः–भो, मा रक्खसभीरुअं मं अवगच्छ। (भोः मा राक्षसभीरुकं मामवगच्छ।)

राजा–(स्मितं कृत्वा) भो महाब्राह्मण, कथमिदं त्वयि सम्भाव्यते।

विदूषकः–तेण हि राआणुणो विअ गन्तुं इच्छामि। (तेन हि राजानुजः इव गन्तुमिच्छामि।)

राजा–ननु तपोवनोपरोधः परिहरणीय इति, सर्वानिवानुयात्रिकांस्त्वयैव सह प्रेषयामि।

विदूषकः–(सगर्वम्) ही ही, जुअरावो म्हि संवुत्तो। (ही ही, युवराजोऽस्मि संवृत्तः।)

राजा–(आत्मगतम्) चपलोऽयं बटुः, कदाचिदिमामस्मत्प्रार्थनामन्तःपुरेभ्यो निवेदयेत्। भवत्वेवं तावत्। (विदूषकं हस्ते गृहीत्वा प्रकाशम्) सखे माधव्य, ऋषिगौरवाद् आश्रमपदं गच्छामि। न खलु सत्यमेव तापसकन्यायामभिलाषो मे। पश्य–

**क्व वयं, क्व परोक्षमन्मथो मृगशावैः सह वर्धितो जनः।**
**परिहासविकल्पितं सखे परमार्थेन न गृह्यतां वचः।। 2–19।।**

विदूषकः–एवं णेदं। (एवं नु एतत्।)

(इति निष्क्रान्ताः सर्वे)

।। इति द्वितीयोऽङ्कः।।

---

भो मा राक्षसभीरुकं मामवगच्छ। तेन हि राजानुज इव गन्तुमिच्छामि। युवराजोऽस्मि संवृत्तः। क्व०। (2-19)। परिहस्येति कौतुककल्पितम्। एवमेतत्।।

**।। इति द्वितीयाङ्क-विवरणम्।।**

—•—

## ।। अथ तृतीयोऽङ्कः ।।

(ततः प्रविशति कुशानादाय यजमानशिष्यः।)

**शिष्यः**–(विचिन्त्य सविस्मयम्) अहो, महाप्रभावो राजा दुःषन्तः। येन प्रविष्टमात्र एवात्रभवति निरुपप्लवानि नः कार्याणि संवृत्तानि।

**का कथा बाणसन्धाने ज्याशब्देनैव दूरतः।**
**हूङ्कारेणेव धनुषः स हि विघ्नान् व्यपोहति।। 3–1।।**

यावदिमान् वेदीसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपहरामि। (परिक्रम्यावलोक्य च आकाशे) प्रियंवदे, कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीदलानि नीयन्ते।

(आकर्ण्य) किं ब्रवीषि ......। आतपलङ्घनाद्बलवदसुस्थशरीरा शकुन्तला। तस्याः शरीरनिर्वापणायेति। प्रियंवदे, यत्नादुपचर्यताम्। सा हि तत्रभवतः कुलपतेरुच्छ्वसितम्। अहमपि वैतानं शान्त्युदकमस्या एव गौतमीहस्ते विसर्जयिष्यामि।

(इति निष्क्रान्तः)

(प्रवेशकः)

(ततः प्रविशति मदनावस्थो राजा)

**राजा**–(सचिन्तं निःश्वस्य)

**जाने तपसो वीर्यं सा बाला परवतीति मे विदितम्।**
**न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम्।। 3–2।।**

भगवन्मन्मथ। कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत्। (स्मृत्वा) आं.... ज्ञातम्।

---

उपप्लवो विघ्नः। का० (3–1)।। इवोत्प्रेक्षायाम्। व्यपोहति निराकरोति। हूं क्रोधे। ईहार्तिष्विति भरतः। आकाश इति। आकाशभाषित क्वेति ज्ञेयमुत्तरसन्धय इति भरतः। किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते। श्रुत्वैवानुक्तमप्यर्थं तत् स्यादाकाशभाषितमिति च।। उशीरं वीरणमूलम्। आतपेति आतपकृतपरिभवात् निर्वापणं स्वास्थ्यम्। उच्छ्वसितं जीवनम्। वैतानं वितानाख्ययागसम्बन्धि शान्त्युदकम्। नैरुज्यप्रदं जलम्।

प्रवेशक इति। प्रवेशकोऽनुदात्तोक्त्या नीचपात्र-प्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः, शेषं विष्कम्भको यथा। अङ्कद्वयान्तरिति प्रथमाङ्केऽस्य निषेधः।

मदनेति०।। उद्वेगाख्या पञ्चमी कामावस्थेयम्। तदुक्तम् भरतेन–उद्वेगः पञ्चमे प्रोक्त इति।

जाने०।। (3–2) तपसो वीर्यमित्यनेन दुष्यापहारो निरस्तः। बाला षोडशवर्षीया। अथ च शिशुः पराधीनेति मयैव ज्ञातम्, एतेन "तया मनोरथो मम पूरणीयः" इत्युक्तम्। तर्हि तदभिलाषाद् विरम्यतामित्याह। न चेति निम्नं गभीरमित्यर्थः। बालेति०। "बालेति गीयते नारी यावत् षोडषवत्सरमिति "भरतः। आमिति स्मरणे।

अद्या०।। (3–3) अद्य नूनम् उत्प्रेक्ष्यं त्वयि यत् और्वो वाडवाग्निः। मद्विधानां विरहिणां

**अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ।**
**त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः।। 3–3।।**

अपि च। त्वया चन्द्रमसा च विश्वसनीयाभ्यामभिसन्धीयते कामिसार्थः। कुतः–

**तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-**
**र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु।**
**विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-**
**स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि।। 3–4।।**

अथवा–

**अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे।**
**यदि मदिरायत-नयनां तामधिकृत्य प्रहरतीति।। 3–5।।**

भगवन्, एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः।

**वृथैव संकल्पशतैरजस्रमनङ्ग नीतोऽसि मयातिवृद्धिम्।**
**आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः।। 3–6।।**

क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नमात्मानं विनोदयामि। (निःश्वस्य) न च प्रियादर्शनादृते शरणमन्यत्। (ऊर्ध्वमवलोक्य) इमामुग्रातपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना तत्रभवती गमयति। भवतु, तत्रैव गच्छामि। (परिक्रम्यावलोक्य च) अनया बालपादपवीथ्या सुतनुरचिरं गतेति तर्कयामि। कुतः–

---

एवम् उपलभ्यमानः। एवं प्रकारेण उत्प्रेक्षेयम्। विश्वसनीयाभ्यामशंकनीयाभ्याम् प्रतिसन्धीयते हिंस्यते[29]। हिंसा स्याद् अभिसन्धानमि-त्यमरः।

तवेहि(ति)०।। (3-4) अयथार्थम् असत्यम्। वज्रसारीकरोषि। वज्रवद् दृढप्रहारा{हा}न् करोषि। हर्षणः प्रहसनश्चैव मोहनो मूर्च्छनस्तथा। विकर्षणश्च कामस्य शराः पञ्च प्रकीर्तिताः।। इति भरतः।

अनि०।। (3-5) अनिशं निरन्तरं रुजं पीडाम् आवहन् कुर्व्वन् दुःखदत्वेपि कथमित्याह। यदि वेवार्थे इति हेतौ तां शकुन्तलामेवोद्दिश्य प्रहरति यद् इत्यर्थः। मदिरेति। मदिरोपममायतं दीर्घञ्च नयनं यस्याः। शोणत्वान्मदिरोपमानं नयनोपमाप्रकरणे कविकल्पलतायाम्। तथा दर्शनात्, यद्वा मदिरा तरुणे मद इति दृष्टिप्रभेदप्रकरणे त्रिलोचनमिश्रादयः। ततश्च मदिरायामायतं दीर्घञ्च नयनं यस्येत्यर्थः।।

मदिरं सुन्दरमिति तु बहिर्दृशः शङ्करादयः। एवञ्च मदिरो मत्त खञ्जन इति। मदिरं सुन्दरेऽपी(पि) स्यादीषद्घूर्णनशील इति च कोष-कल्पनापि मूर्खाणाम्। अनुक्रोशः कृपा।

वृथैव०।।(3-6) सङ्कल्पो ध्यानम्। हे अनङ्ग, कथं व्यर्थत्वमित्याह–कर्णसमीपे चापमानीय मय्येव तव योग्यः शरत्यागो नान्यस्मिन्, यतो मयि बाणं पातयिष्यतो वृथेत्यर्थः। काव्यलिङ्गमलङ्कारः।। शरण्यं रक्षकम्, वलयं समूहः, गमयति। वीथ्या निरावली: पङ्क्तिरित्यमरः।

29. हिंस्यात् इति 4117 इति मातृकायाः पाठः।

**संमीलन्ति न तावद्बन्धनकोशास्तयावचितपुष्पाः।**
**क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः।। 3–7।।**

(स्पर्शं रूपयित्वा) अहो, प्रवातसुभगोऽयं वनोद्देशः।

**शक्योऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्।**
**अङ्गैरनङ्गतप्तैर्निर्दयमालिङ्गितुं पवनः।। 3–8।।**

(विलोक्य) हन्त, अस्मिन्नेव वेतसलतामण्डपे भवितव्यं शकुन्तलया। तथा हि–

**अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात्।**
**द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा।। 3–9।।**

यावद्विटपान्तरेणावलोकयामि। (तथा कृत्वा सहर्षम्) अये, लब्धं नेत्रनिर्वाणम्। एषा मनोरथप्रिया मे कुसुमास्तरणशिलापट्टमधिशयाना सखीभ्यामुपास्यते। भवतु। शृणोमि तावदासां विस्रम्भकथितानि। (इति विलोकयन्नवस्थितः)

(ततः प्रविशति सह सखीभ्यां शकुन्तला)

**सख्यौ**–(उपवीज्य) हला सउन्तले, अवि सुहाअदि दे णलिणीवत्तवादो। (सखी शकुन्तले, अपि सुखायते ते नलिनीपत्रवातः।)

**शकुन्तला**–(सखेदम्) किं वीअअन्ति मं पिअसहीओ। (किं वीजयतः मां प्रियसख्यौ।)

(उभे सविषादं परस्परमवलोकयतः।)

**राजा**–बलवदसुस्थशरीरा तत्रभवती दृश्यते। (सवितर्कम्) तत्किमयमातपदोषः स्याद्, उत यथा मे मनसि वर्तते। (विचिन्त्य) अथवा कृतं सन्देहेन।

---

बन्ध०।। (3–7) बन्धनकोषा वृन्तगर्भाणि क्षीरस्निग्धागलद् दुग्धा इति यावत्। च्छेदाः खण्डाः चिरत्रोटनेन वृन्तसङ्कोचो जायते अगलद्दुग्धतापि। अत्र विपरीतं दृश्यत इति। आचार गतेति भावः। उन्मीलन्तीति प्राचीनः पाठः। अनुमानालङ्कारः। बलिकर्म्मा[न]र्ह[स्य,] कुसुम-किल(स)स(ल) यानां च्छेदनमतिदुर्ललितम्। शकुन्तलां विना न सम्भवतीत्यर्थः इति शङ्करः। प्रवातः प्रशस्तानिलः।

शक्य०।। (3–8) अरविन्देति कणेति च। सौगन्ध्य-शैत्ये उक्ते गुणत्रययुक्तमिति शङ्करः। उक्तञ्च, शीतो मन्दः सुगन्धिस्त्रिविधो मत इति। निर्दयं दृढं। हन्त हर्षे।

अभ्यु०।। (3–9) अवगाढा निम्ना। एतदपि प्रशस्तलक्षणम्। नान्यस्य इत्यनुमानालङ्कारः। परिसर्प-नामकं प्रतिमुखाङ्कमिदम्। यदुक्तं दष्ट-नष्टानुसरणं परिसर्पश्च कथ्यत इति। निर्वाणं सुखम्। निर्वाणमपवर्गेऽपि। निर्वाणं निर्वृतिं विदुरिति शाश्वतः। मनोरथेन प्रिया, न तु प्रकान्तरेण। अत एव चक्षुष एव सुखमनुभूयत इति भावः। कुसुमेति। विस्तृतकुसुमशयनं शिलापट्टं पाषाणखण्डम्। हला शकुन्तले, अपि सुखायते नलिनीपत्रवातः। किं वीजयतो मां प्रियसख्यौ। सविषादमिति, शकुन्तला-ज्ञानलोपात्। उत पक्षान्तरे। कृतं व्यर्थम्।।

**स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं**
**प्रियायाः साबाधं तदपि कमनीयं वपुरिदम्।**
**समस्तापः कामं मनसिजनिदाघप्रसरयो-**
**र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु।। 3–10।।**

**प्रियंवदा**–(जनान्तिकम्) अणुसूए, तस्स राएसिणो पढमदंसण्णादो आरम्भिअ पज्जुस्सुअमणा सउन्तला। ण क्खु से अण्णणिमित्तो आदङ्को भवे। (अनुसूये, तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकमनाः शकुन्तला। न खल्वस्या अन्यनिमित्त आतङ्कः भवेत्।

**अनुसूया**–ममावि एरिसी आसङ्का। भोदु। पुच्छस्सं। सहि पुच्छिदव्वा सि किं पि। बलीओ क्खु अङ्गसंतावो। (ममापि ईदृश्याशङ्का। भवतु। प्रक्ष्यामि। सखि, प्रष्टव्यासि किम् अपि। बलीयान् खल्वङ्गसन्तापः।)

**राजा**–वक्तव्यमेव।

**शशिकरविशदान्यस्यास्तथा हि दुःसहनिदाघशंसीनि।**
**भिन्नानि श्यामिकया मृणालनिर्माणवलयानि।। 3–11।।**

**शकुन्तला**–(पूर्वार्धेन शयनादुत्थाय) हला, भण जं वत्तुकामा सि। (सखि, भण यद्वक्तुकामासि।)

**अनुसूया**–हला सउन्तले, अणब्भन्तराओ अम्हे मणोगदस्स दे वुत्तन्तस्स। किं तु

---

उशीरं०।। (3-10) वीरणमूलम्। प्रियायाः शरीरं सपीडमपि मनोहारि। कीदृशं, प्रशिथिलः कोमलो मृणालस्यैव। एकोऽद्वितीयो वलयो यत्र समासार्थो नियमः वलयान्तरोद्वहनासामर्थ्यात्। कामं निश्चितम्। सुभगं रम्यम्। अपराद्धमपराधः। एतादृशरूपता ग्रीष्मस्य न भवतीत्यर्थः। तथा च स्मरस्यैव विलसितमेतदिति भावः।

स्रजो भूषणगन्धांश्च गृहाण्युपवनानि च।
कामाग्निना हि सन्तप्तः शीतलं वस्तु नेच्छती[30]ति भरतः।।

एतस्य राजर्षेः प्रथमदर्शनादारभ्य पर्य्युत्सुकमनाः शकुन्तला। न ह्यन्यनिमित्ता शङ्का भवेत्। ममापि एतादृशी आशङ्का। भवतु प्रक्ष्यामि। सखि, प्रष्टव्यासि किमपि, बलीयान् अङ्गसन्तापः।

शशि०[31]।। (3-11) भिन्नानि मिश्रितानि श्यामिका श्यामत्वं। सखि, भण। यद् वक्तुकामासि। सखि शकुन्तले, अनभ्यन्तरे आवाम् एतस्य मनोगतस्य वृत्तान्तस्य। किन्तु यादृशी इतिहासकथानुबन्धेषु कामयमानानां कामुकानामवस्था श्रूयते। तादृशी तवापीति तर्कयामि। अवस्थाश्च दश भरतेनोक्ताः।

अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशताऽरुचिः।
अरतिः[32] स्यादनालम्बा तन्मयोन्माद-मूर्च्छनाः। पूर्वानुभवजा ज्ञेयाः एताः स्मर दशा दश।।

---

30. शङ्करटीकायां "सेवते" इति पाठः।
31. शङ्करटीकायां श्लोकोऽयं नास्ति।
32. शङ्करटीकायां "आवृतिः" इति पाठः।

जादिसी इदिहासकधाणुबन्धेसुं कामअमाणाणं अवत्था सुणीअदि तादिसी तुह त्ति तक्केमि। ता कधेहि, किं णिमित्तं दे अअं आआसो। विआरं परमत्थदो अआणिअ अणारम्भो किल पडीआरस्स। (सखि शकुन्तले, अनभ्यन्तरे आवां मनोगतस्य ते वृतान्तस्य। किं तु यादृशी इतिहासकथानुबन्धेषु कामयमानानामवस्था श्रूयते। तादृशी तवैति तर्कयामि। तत्कथय किन्निमित्तं ते अयमायासः। विकारं परमार्थतः अज्ञात्वा अनारम्भः किल प्रतीकारस्य।)

**राजा**–अनुसूययापि मदीयस्तर्कोऽनुगतः।

**शकुन्तला**–बलीओ क्खु मे आआसो। ण सहसा सक्कणोमि णिवेदिदुं। (बलीयान्खलु मे आयासः। न सहसा शक्नोमि निवेदयितुम्।)

**प्रियंवदा**–सहि, सुट्ठु क्खु एसा भणादि। किं एदं अत्तणो उवद्दवं णिगूहसि। अणुदिअसं च परिहीअसि अङ्गेसुं। केवलं लावण्णमई छाआ तुमं ण मुञ्चेदि। (सखि, सुष्ठु खल्वेषा भणति। किमेतमात्मनः उपद्रवं निगूहसि। अनुदिवसञ्च परिहीयसे अङ्गेषु। केवलं लावण्यमयी छाया त्वां न मुञ्चति।

**राजा**–अवितथमाह प्रियंवदा। तथा ह्यस्याः–

**क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं**
**मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डरा।**
**शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते**
**पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी।। 3–12।।**

**शकुन्तला**–(निःश्वस्य) कस्स वा अण्णस्स कधइस्सं। किं तु आआसइत्तिआ वो भविस्सं। (कस्य वा अन्यस्य कथयिष्यामि। किं तु आयासयित्री वां भविष्यामि।)

**उभे**–सहि, अदो ज्जेव णो णिव्वन्धो। संविभत्तं खु दुक्खं सज्झवेअणं भोदि। (सखि, अतः एव नौ निर्बन्धः। संविभक्तं खलु दुःखं सह्यवेदनं भवति।)

---

तत् कथय किन्निमित्तं तेऽयमायास इति। विकारं परमार्थतोऽज्ञात्वानारम्भः किल प्रतीकारस्य। बलीयान् खलु ममायासो, न सहसा शक्नोमि निवेदयितुम्।

सुष्ठु खल्वेषा भणति। किमेतमात्मन उपप्लवं निगूहसि। अनुदिवसञ्च परिहीयसे अङ्गेषु। केवलं लावण्यमयी च्छाया त्वां न मुञ्चति। च्छाया स्याद् आतपाभावे प्रभाप्रतिमयोरपीति शाश्वतः। अवितथं सत्यम्।

क्षाम०।। (3–12) त्यक्तं त्यक्तं शोषणेन व्यपनायकेन। लतामाधवीति संघात(:), विगृहीत–विपर्य्यस्तेत्यभिधानिकाः, तेन "माधवीलता, लता माधवी चे"ति नामानि। कस्य वान्यस्य कथयिष्यामि। किन्तु आयासकारिणी युवयोर्भविष्यामि। सखि, अत एव निर्बन्धः।

संविभक्तं खलु दुःखं सह्यवेदनं भवति।

यदाह–न दुःखं पञ्चभिः [सहेति]।

**राजा–**

**पृष्टा जनेन समदुःखसुखेन बाला**
**नेयं न वक्ष्यति मनोगतमाधिहेतुम्।**
**दृष्टो निवृत्य बहुशोऽप्यनया सतृष्णम्**
**अत्रोत्तरश्रवणकातरतां गतोऽस्मि।। 3–13।।**

**शकुन्तला**–जदो पहुदि सो तवोवणरक्खिदा राएसी मम दंसणपधं गदो। (यतः प्रभृति सः तपोवनरक्षिता राजर्षिः मम दर्शनपथं गतः।) (इत्यर्धोक्ते लज्जां नाटयति।)

**उभे**–कधेदु पिअसही। (कथयतु प्रियसखी।)

**शकुन्तला**–तदो पहुदि तग्गदेण अहिलासेण एदावत्थ म्हि संवुत्ता। (ततः प्रभृति तद्गतेनाभिलाषेणेतदवस्थास्मि संवृत्ता।)

**उभे–**दिट्ठिआ, इदाणिं दे अणुरूवे वरे अहिणिवेसो। अधवा। साअरं उज्झिअ कहिं वा महाणदीए पविसिदव्वं। (दिष्ट्या, इदानीं ते अनुरूपे वरे अभिनिवेशः। अथवा सागरमुज्झित्वा कुत्र वा महानद्या प्रवेष्टव्यम्।)

**राजा**–(सहर्षम्) श्रुतं यच्छ्रोतव्यम्।

**स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।**
**दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य।। 3–14।।**

**शकुन्तला–**ता जइ वो अणुमदं तदो तधा पअत्तध जधा तस्स राएसिणो अणुकम्पणीआ होमि। अण्णधा सुमरेध मं। (तद्यदि वां अनुमतं ततः तथा प्रयतेथाम् यथा तस्य राजर्षेः अनुकम्पनीया भवामि। अन्यथा स्मरतं माम्।)

**राजा–**विमर्शच्छेदि वचनम्।

---

पृष्टा०।। (3-13) समसुखादिना जनेन सखीलोकेनेत्यर्थः। पुंस्याधिर्मानसी व्यथेत्यर्थः। स्निग्धा दृष्टिर्भावसूचिका। यदुक्तम्–लेखप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः। दूतीसंप्रेषणैर्नार्य्या भावाभिव्यक्तिरिष्यत इति। कातरतां व्याकुलतां सतृष्णतामित्यन्यः। यद्यपि दुःखहेतोरवश्यकथनादात्मनि तत् स्निग्धावलोकनाच्च। कातरता न युक्ति सहा तथाप्यतिदुर्ललितप्राप्तौ आधिकरणमहमन्यो वेति चित्तप्रत्ययो न जायत इत्यर्थः। यतः प्रभृति स तपोवनरक्षिता राजर्षिर्मम दर्शनपथं गतः। कथयतु प्रियसखी। ततः प्रभृति तद्गतेनाभिलाषेण एतावदवस्थास्मि संवृत्ता। दिष्ट्या आनन्देन, दिष्ट्या भाग्येन वा। इदानीं तेऽनुरूपे वरेऽभिलाषः, अभिनिवेशो वा। अथवा सागरं वर्जयित्वा कुत्र वा महानद्या प्रवेष्टव्यं, प्रसर्तव्यं वा।

स्मर०।। (3-14) निर्वापयिता सुखयिता। तपात्यये ग्रीष्मावसाने मेघसम्बन्धार्थमिदमुक्तम्। अत्र हि मेघोदयेऽपि। हि दिवसोऽधिकं तापयित्वा पश्चाद् वृष्ट्या निर्वापयतीति जातिः। केचित्तु मेघाभावे तापयति तत् सम्बन्ध च निर्वापयतीत्याहुः।

**प्रियंवदा**–(जनान्तिकम्) अणुसूए, दूरगदमम्मधा अक्खमा खु इअं कालहरणस्स। (अनुसूये, दूरगतमन्मथा अक्षमा खल्वियं कालहरणस्य।)

**अनुसूया**–पिअंवदे, को उवाओ भवे जेण अविलम्बिदं णिहुदं च सहीए मणोरधं सम्पादेमो। (प्रियंवदे कः उपायः भवेत् येनाविलम्बितं निभृतं च सख्याः मनोरथं सम्पादयावः।)

**प्रियंवदा**–सहि, णिहुदं ति पअत्तिदव्वं। सिग्धं ति ण दुक्करं। (सखि, निभृतमिति प्रयतितव्यम्। शीघ्रमिति न दुष्करम्।)

**अनुसूया**–कधं विअ। (कथमिव।)

**प्रियंवदा**–णं सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिसूइदाहिलासो इमेसुं दिअसेसुं पज्जाअरकिसो विअ लक्खीअदी। (ननु सोऽपि राजर्षिः अस्मिन् जने स्निग्धदृष्टि-सूचिताभिलाषः एषु दिवसेषु प्रजागरकृशः इव लक्ष्यते।)

**राजा**–सत्यमित्थंभूत एवास्मि। तथा हि–

**अशिशिरतरैरन्तस्तापैर्विवर्णमणीकृतं**
**निशि निशि भुजन्यस्तापाङ्गप्रवर्तिभिरश्रुभिः।**
**अनतिलुलितज्याघाताङ्कान्मुहुर्मणिबन्धनात्**
**कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते।। 3–15।।**

**प्रियंवदा**–(विचिन्त्य) हला अणुसूए, मअणलेहो दाणिं से करीअदु। तं अहं सुमणोगोविदं कदुअ देवदासेसावदेसेण तस्स रण्णो हत्थं पावइस्सं। (सखि अनुसूये, मदनलेखः इदानीम् अस्याः क्रियताम्। तमहं सुमनोगोपितं कृत्वा देवताशेषापदेशेन तस्य राज्ञः हस्तं प्रापयिष्यामि।)

---

तद्यदि वोऽनुमतं ततस्तथा प्रयतेथां यथा तस्य राजर्षेरनुकम्पनीया भवामीति। अन्यथा स्मरत माम्। अन्यथा प्रसीदतं, सिञ्चतं इदानीं मे उदकम्, मामुदकैः सिञ्चतमित्यर्थः इति शङ्करसम्मतः पाठोऽर्थश्च। विमर्षे इयमनुरक्ता न वेति परामर्शः। कामफलं येनेदृगवस्थामारोपिता। यत्नेति प्रयत्नः परमवशिष्यत इत्यर्थः। अनुसूये दूरगतमन्मथा प्ररूढकामा अक्षमा खल्वियं कालहरणस्य विलम्बस्य। प्रियम्वदे, क उपायो भवेत्। येनाविलम्बं निभृतञ्च सख्या मनोरथं सम्पादयावः। निभृतमिति प्रयतितव्यं, शीघ्रमिति न दुष्करं। कथमिव। सोऽपि राजर्षिरेतस्मिन् जने स्निग्धदृष्ट्या सूचिताभिलाषः। एतेषु दिवसेषु प्रजागरकृश इव लक्ष्यते। "कटाक्षिणी साभिलाषा दृष्टिः स्निग्धाभिधीयते" इति भरतः।

आ(अ)न० / (अशिशिर०) ।। (3-15) कनकवलयं पुनःप्रतिसार्य्यते, उपरि नीयते। कीदृशं, मणिबन्धनात् करमूलात् वारंवारमधःपतितं स्रस्तं, मणिबन्धनात् प्रतिसार्यत इति वा। अतिकार्श्येन नातिमुदितो ज्याघाताङ्को यत्र क्रियाविशेषणम्। शङ्करस्तु अनतिलुलितो नातिविलुप्तो ज्यायाः य आघातः संघर्षः, स एवाङ्कं चिह्नं किणो यत्र। मणिबन्धनविशेषणमित्याह। कीदृशमन्तस्तापैः करणैरत्यन्ततप्तैरश्रुभिर्विवर्णं मलिनीकृतम्। अश्रुसम्बन्धयोग्यतामाह। निशीति।

**अनुसूया**–सहि, रोअदि मे सुउमारो एसो पओओ। किं वा सउन्तला भणादि। (सखि, रोचते मे सुकुमारः एषः प्रयोगः। किं वा शकुन्तला भणति।)

**शकुन्तला**–णिओओ वि विअप्पीअदि। (नियोगोऽपि विकल्प्यते।)

**प्रियंवदा**–तेण हि अत्तणो उवण्णासाणुरूवं चिन्तेहि किं पि ललिदोवणिबन्धणं गीदअं। (तेन हि आत्मनः उपन्यासानुरूपं चिन्तय किमपि ललितोपनिबन्धनं गीतकम्।)

**शकुन्तला**–चिन्तइस्सं। किं तु अवहीरणाभीरुअं वेवदि मे हिअअं। (चिन्तयिष्यामि। किं तु अवधीरणाभीरुकं वेपते मे हृदयम्।)

**राजा**–

**अयं स ते तिष्ठति संगमोत्सुको**
**विशङ्कसे भीरु यतोऽवधीरणाम्।**
**लभेत वा प्रार्थयिता न वा श्रियं**
**श्रियो दुरापः कथमीप्सितो भवेत्।। 3–16।।**

अपि च–

**अयं स यस्मात्प्रणयावधीरणाम्**
**अशङ्कनीयां करभोरु शङ्कसे।**
**उपस्थितस्त्वां प्रणयोत्सुको जनो**
**न रत्नमन्विष्यति, मृग्यते हि तत्।। 3–17।।**

**सख्यौ**–अइ अत्तगुणावमाणिणि। को णाम संतावणिव्वावइत्तिअं सारदीअं जोण्हं आदवत्तेण वारइस्सदि। (अयि आत्मगुणावमानिनि, को नाम संतापनिर्वापयित्रीं शारदीयां ज्योत्स्नाम् आतपत्रेण वारयिष्यति।)

---

सखि, मदनलेखं इदानीमस्याः क्रियतां। स्मरभावसूचकं लिखनम् अनङ्गलेखः। नृपसविधगमनयोग्यतामाह–तमहं सुमनोगोपितं कृत्वा देवताशेषापदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि। सुमनः पुष्पाणि, शेषं निर्माल्यम्। सखि, रोचते मे सुकुमार एष प्रयोगः। किम्वा शकुन्तला भणति। नियोगो[33]ऽपि विकल्प्यते। हृदयङ्गम एवायं पक्षो मयेति भावः। तेन हि आत्मन उपन्यासानुरूपं चिन्तय ललितोपनिबन्धं ग(गी)तिः। उपन्यासस्तु वाङ्मुख इत्यमरः। चिन्तयिष्यामि। किन्त्वव-धीरणाभीरुकं नृपकृत-तिरस्कार-त्रस्तं मे हृदयम्।

अयं०।। (3-16) प्रार्थयिता जनः श्रियं लभेत वा न वा। लक्ष्म्या ईप्सितस्तु कथं दुर्लभो भवेत्, अपि तु नेत्यर्थः। दृष्टान्तोऽलंकारः। उक्ति पोषमाह।

अयं०।। (3-17) प्रणयः प्रेमा। अयं स प्रणयाकाङ्क्षी त्वामुपस्थित इत्यन्वयः। रत्नं कर्तृ, अयमपि दृष्टान्तः।।

---

33. वियोगोपि इति 4118 इत्यत्र पाठः।

**शकुन्तला**–(सस्मितम्) णिओइद म्हि। (नियोजितास्मि।) (इति चिन्तयति।)

**राजा**–स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि। तथा हि–

**उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।**
**पुलकाचितेन कथयति मय्यनुरागं कपोलेन।। 3–18।।**

**शकुन्तला**–हला, चिन्तिदा मए गीदिया। असंणिहिदाइं उण लेहसाहणाइं। (सखि, चिन्तिता मया गीतिका। असन्निहितानि पुनः लेखसाधनानि।)

**प्रियंवदा**–णं इमस्सिं सुओदरसिणिद्धे णलिणीवत्ते पत्तच्छेदभत्तीए णहेहिं आलिहीअदु। (नन्वस्मिन् शुकोदरस्निग्धे नलिनीपत्रे पत्रच्छेदभक्त्या नखैः आलिख्यताम्।)

**शकुन्तला**–सुणध दाव णं संगदत्था ण व त्ति। (शृणुतं तावत् सङ्गतार्था न वा इति)

**उभे**–अवहिदाओ म्ह। (अवहिते स्वः।)

**शकुन्तला**–(पठति)

**तुज्झ ण आणे हिअअं मम उण मअणो दिवा अ रत्तिं च।**
**णिक्किव दावइ वलिअं तुह हुत्तमणोरहाइ अङ्गाइं।। 3–19।।**
**(तव न जाने हृदयं मम पुनः मदनः दिवा च रात्रिञ्च।**
**निष्कृप तापयति बलीयः तव अभिमुखमनोरथायाः अङ्गानि)।। 3–19।।**

**राजा**–(सहसोपसृत्य)

---

अयि०।। आत्मगुणावमानिनि, को नाम सन्तापनिर्वाणकारिणीं शारदीयां ज्योत्स्नाम् आतप{मा}पत्रेण वारयिष्यति। नियोजितास्मि। स्थाने युक्तार्थेऽव्ययम्।

उन्नमि०।। (3-18) उन्नमितेति चिन्तनौपयिकं रूपमुक्तम्। अनेन सात्त्विको भावः उन्नीयते। तदुक्तम् सङ्गमे स्मरणे चैव प्रियस्यालोकने तथा। हेतुत्रयं समासाद्य सात्त्विकः संप्रवर्तते।। ते च स्तम्भः स्वेद[34] इत्यादयः। क्रमनामकं काव्याङ्गमिदम्। तदुक्तम्–भावना लब्धोपलब्धिस्तु[35], क्रमोऽयं परिकीर्तित इति। सखि, चिन्तिता मया गीतिका असन्निहितानि पुनर्लेख-साधनानि। ननु एतस्मिन् शुकोदरस्निग्धे नलिनीपत्रे पत्रच्छेदभक्त्या वचनया नखेनालिख्यताम्। शृणुतं तावत् सङ्गतार्था न वेति। अवहि[ते] स्वः।

तुज्झ०।। (3-19) तव न जाने हृदयं मम पुनर्म्मदनो दिवा च रात्रिञ्च। निष्कृप तापयति बलीयस्त्वदभिमुख-मनोरथाया अङ्गानि।। हे निष्कृप,। हुत्तशब्दः प्राकृतेऽभिमुखे वर्तते। उत्तरोत्तराख्यमिदं लास्यम्। तदुक्तं भरतेन यदङ्गा तया स्वस्थे प्रिये सोल्लुण्ठभाषितम्। प्रयुज्यते नायिकया तद् भवेदुत्तरोत्तरम्।।

---

34. शङ्करटीकायाम्– "स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यश्रुविलयो इत्यष्टौ सात्त्विकाः स्मृताः" इति।।

35. भावतत्त्वोपलब्धिस्तु इति 4118 इत्यत्र।

**तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव।**
**ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः।। 3–20।।**

**सख्यौ**–(विलोक्य सहर्षमुत्थाय) साअदं जधासमीहिदफलस्स अविलम्विणो मणोरधस्स। (स्वागतं यथासमीहितफलस्याविलम्बिनः मनोरथस्य।)

(शकुन्तला उत्थातुमिच्छति)

**राजा**–सुन्दरि, अलमलमायासेन।

**संदष्टकुसुमशयनान्याशुविमर्दितमृणालवलयानि।**
**गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति।। 3–21।।**

**शकुन्तला–**(ससाध्वसमात्मगतम्) हिअअ। तधा उत्तम्मिअ इदाणिं ण किं पि पडिवज्जसि। (हृदय, तथा उत्तम्य इदानीं न किमपि प्रतिपद्यसे।)

**अनुसूया**–इदो सिलादलेक्कदेसं अणुगेण्हदु महाराओ। (इतः शिलातलैकदेशमनुगृह्णातु महाराजः।)

(शकुन्तला किंचिद् अपसरति।)

**राजा**–(उपविश्य) प्रियंवदे, कच्चित् सखीं वो नातिबाधते शरीरतापः।

**प्रियंवदा–**(सस्मितम्) लद्धोसदो संपदं उवसमं गमिस्सदि। महाराअ, दोण्णं पि वो अण्णोण्णाणुराओ पच्चक्खो। सहीसिणेहो उण पुणरुत्तवाइणिं करेदि मं। (लब्धौषधः साम्प्रतमुपशमनं गमिष्यति। महाराज, द्वयोरपि वाम् अन्योऽन्यानुरागः प्रत्यक्षः। सखीस्नेहः पुनः पुनरुक्तवादिनीं करोति माम्।)

**राजा–**भद्रे, न तत्परिहार्यं यतो विवक्षितमनुक्तमनुतापं जनयति।

**प्रियंवदा**–तेण हि सुणादुं अज्जो। (तेन हि शृणोत्वार्यः।)

**राजा**–अवहितोऽस्मि।

---

तपति०।। (3–20) हे कृशगात्रि, दहति भस्मसात् करोति। अनिशमित्युभयत्र प्रजिवस्यु-पमालङ्कारः। अर्थान्तरन्यास इति शङ्करः। विलोक्येति, पृष्ठतो दर्शनं यत्तल्लोकनमुदाहृतमिति भरत इति शङ्करः। स्वागतं कुशलं यथा सखी हितफलस्याविलम्बिनो मनोरथस्य भरत इत्यर्थः। मनोरथरूपो भवानेवेत्यर्थः।

सन्दष्ट०।। (3–21) सन्दष्टमाश्लिष्टं विवर्णितं म्लानीभूतं, विमर्दितञ्च पाठः। उपचारं सेवा। हृदय तथा उत्तम्य(मा?) इदानीं न किमपि प्रतिपद्यसे। इतः शिलातलैकदेशमलङ्करोतु, अनुगृह्णातु वा महाराजः। इत इत द्वितीयार्थे तसिः। कच्चित् कामप्रवेदन इत्यमरः। अक्षरं संघातनामकं लक्षणमिदम्। तदुक्तं वर्णनाक्षरसंघात–श्चित्रार्थैरक्षरैर्मितैरिति। लब्धौषध इदानीमुपशमं गमिष्यति।। महाभाग द्वयोरप्य-न्योन्यानुरागः प्रत्यक्षः। सखीस्नेहः पुनर्म्मां पुनरुक्तवादिनीं करोति। तेन हि शृणोतु महाभागः। आश्रम-वासिनो जनस्य राज्ञार्तिहरेण भवितव्यमिति। नन्वेष धर्म्मः। तेन हि इयं नः सखी त्वामुद्दिश्य भगवता मदनेनेदमवस्थानं प्रापिता।

**प्रियंवदा**–अस्समवासिणो जणस्स रण्णा अत्तिहरेण होदव्वं ति णं एसो धम्मो। (आश्रमवासिनः जनस्य राज्ञा आर्तिहरेण भवितव्यम् इति नन्वैषः धर्मः।)

**राजा**–अस्मात्परं किं तत्।

**प्रियंवदा**–तेण हि इअं णो पिअसही तुमं उद्दिसिअ भअवदा मअणेण इमं अवत्थन्तरं पाविदा। ता अरिहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं। (तेन हि इयं नौ प्रियसखी त्वामुद्दिश्य भगवता मदनेनेदं अवस्थान्तरं प्रापिता। तदर्हसि अभ्युपपत्त्या जीवितम् अस्याः अवलम्बितुम्।)

**राजा**–भद्रे, साधारण एष प्रणयः। सर्वथानुगृहीतोऽस्मि।

**शकुन्तला**–(सप्रणयकोपस्मितम्) हला, अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण। (सखि, अलं वाम् अन्तःपुरविरहपर्युत्सुकेन राजर्षिणा उपरुद्धेन।)

**राजा**–

**इदमनन्यपरायणमन्यथा हृदयसन्निहिते हृदयं मम।**
**यदि समर्थयसे मदिरेक्षणे मदनबाणहतोऽस्मि हतः पुनः।। 3–22।।**

**अनुसूया**–महाराअ, बहुवल्लहा खु राआणो सुणीअन्ति। ता जधा इअं णो पिअसही बन्धुअणसोअणीआ ण भोदि तधा करिस्ससि।

(महाराज, बहुवल्लभाः खलु राजानः श्रूयन्ते। तद्यथा इयं नौ प्रियसखी बन्धुजन-शोचनीया न भवति तथा करिष्यसि।)

**राजा**–भद्रे, किं बहुना।

**परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य नः।**
**समुद्ररसना चोर्वी सखी च युवयोरियम्।। 3–23।।**

उभे–णिव्वुदाओ म्ह। (निर्वृते स्वः।)

(शकुन्तला हर्षं सूचयति)

---

तदर्हस्याभ्युपपत्या जीवितमस्या अवलम्बितुम्। सखि, अलं युवयोरन्तःपुरविरहपर्युत्सुकेन राजर्षिणावरुद्धेन। विधृताख्यं प्रतिमुखार्द्द(ङ्ग)मिदम्। तदुक्तम्–कृतस्यान्नयनस्यादौ विधृतं तदुपरिग्रह इति।

इदमिति०।। (3-22) हे हृदयसन्निहिते चित्तारूढे! इदं मम चित्तं नान्याश्रितम्, यद्यन्य-थान्यपरायणं समर्थयसेऽवगच्छसि तदा मदनशरहतोऽपि पुनर्हतोऽस्मि। ततोऽप्यधिकदुःखादिति। संप्रत्यपि कामः प्रहरिष्यतीति भाव इत्यन्यः। महाभाग, बहुवल्लभाः खलु राजानः श्रूयन्ते। तद्यथेयं नः प्रियसखी बन्धुजनशोचनीया न भवति, तथा करिष्यसि।

परि०।। (3-23) परिग्रहा दाराः, प्रतिष्ठा उत्कर्षहेतुः। समुद्रेति रसना मेखला सागरावच्छिन्ना सम्पूर्णेत्यर्थः। परिग्रहः कलत्रे चेति शाश्वतः।

**प्रियंवदा**–(जनान्तिकम्) अणुसूए, पेक्ख पेक्ख, मेहवादाहदं विअ गिम्हे मोरिं खणे खणे पच्चाअदजीविदं पिअसहिं। (अनुसूये, प्रेक्षस्व प्रेक्षस्व मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे क्षणे प्रत्यागतजीवितां प्रियसखीम्।)

**शकुन्तला**–हला, मरिसावेध लोअवालं जं अम्हेहिं बीसद्धपलाविणीहिं उवआरादिक्कमेण भणिदं। (सख्यौ, मर्षयतं लोकपालं यदस्माभिः विस्रब्धप्रलापिनीभिः उपचारातिक्रमेण भणितम्।)

**सख्यौ**–(सस्मितम्) जेण तं मन्तिदं सो ज्जेव मरिसावेदु। अणस्स को अच्चओ। (येन तत् मन्त्रितं सः एव मर्षयतु। अन्यस्य कः अत्ययः।)

**शकुन्तला**–अरिहदि क्खु महाराओ इमं पच्चक्खवअणं विसोढुं। परोक्खं वा किं ण मन्तीअदि। (अर्हति खलु महाराजः इदं प्रत्यक्षवचनं विषोढुं परोक्षं वा किं न मन्त्र्यते।)

**राजा**–(सस्मितम्)

**अपराधमिमं ततः सहिष्ये यदि रम्भोरु तवाङ्गसङ्गसृष्टे।**
**कुसुमास्तरणे क्लमापहं मे सुजनत्वादनुमन्यसेऽवकाशम्।। 3–24।।**

**प्रियंवदा**–ण एत्तिकेण उण तुट्ठी भविस्सदि। (नैतावता तुष्टिः भविष्यति।)

**शकुन्तला**–(सरोषमिव) विरम दुल्ललिदे। एदावत्थं गदाए वि मए कीळसि। (विरम दुर्ललिते। एतदवस्थां गतयापि मया क्रीडसि।)

**अनुसूया**–(बहिर्विलोक्य) पिअंवदे, एसो तवस्सिमिअपोदओ इदो तदो दिण्णदिट्ठी णूणं मादरं पब्भट्ठं अणुसरेदि। ता संजोएमि दाव णं। (प्रियंवदे, एषः तपस्विमृगपोतकः इतोस्ततो दत्तदृष्टिः नूनं मातरं प्रभ्रष्यामनुसरति। तत्संयोजयामि तावदेनम्।)

---

कुव्याख्या तूपेक्षिता[36]। अनुनयोऽलङ्कारः। वचसा कर्मणा प्रीतिर्यस्मिन्ननुनयो हि स इति शङ्करः। निर्वृते स्वः। अनुसूये, प्रेक्षस्व प्रेक्षस्व मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे क्षणे प्रत्यागत-जीवितां प्रियसखीम्। सखि, मर्षयतं लोकपालं यद् अस्माभिर्विश्रब्धप्रलापिनीभिरुपचारातिक्रमेण भणितम्। अतिक्रमो भणितो वा। येन तन्मन्त्रितं, स एव मर्षयतु। अन्यस्य कोऽत्ययो भयम्। अर्हति खलु महाराज इदं प्रत्यक्षं वचनं विषोढुम्। परोक्षवचनमिति शङ्करः। परोक्षं वा न मन्त्र्यते।

अपरा०।। (3-24) कुसुमेति पुष्पशय्यायां स्वजनत्वादात्मीयत्वादवकाशं स्थानम्। नैतावन्मात्रेण तुष्टि-र्भविष्यति। एतेनैव तुष्टो भविष्यतीति वा पाठः।।

विरम दुर्ललिते एतावदवस्थां गतयापि मया क्रीडसि। विदिताभिप्राया च। अथ च परिहाससमयोऽयं न भवति। यथा जीवामि तथैव कर्तुमुचितमिति भावः।।

विजनत्वं चिकीर्षुरनुसूया सव्याजमाह।

---

36. शङ्करेण स्वटीकायां समुद्ररशना इति शब्दस्य या व्याख्या विहिता सा नोचिता, न च ग्राह्येति चन्द्रशेखरस्याभिमतम्।

**प्रियंवदा**–हला चवलो क्खु एसो। णं णिवारिदुं एआइणी ण पारेसि। ता अहं पि सहाअत्तणं करइस्सं। (सखि, चपलः खल्वेषः। एनं निवारयितुमेकाकिनी न पारयसि। तदहमपि सहायत्वं करिष्यामि।) (इत्युभे प्रस्थिते)

**शकुन्तला**–इदो अण्णदो ण वो गन्तुं अणुमण्णे जदो असहाइणि म्हि। (इतः अन्यतः न वां गन्तुमनुमन्ये यतः असहायिन्यस्मि।)

**उभे**–(सस्मितम्) तुमं दाव असहाइणी जाए पुढवीणाधो समीवे वट्टदि। (त्वं तावत् असहायिनी यस्याः पृथिवीनाथः समीपे वर्तते।)

(इति निष्क्रान्ते)

**शकुन्तला**–कधं गदाओ पिअसहीओ। (कथं गते प्रिसख्यौ।)

**राजा**–(दिशोऽवलोक्य) सुन्दरि अलमावेगेन। नन्वयमाराधयिता जनस्ते सखीभूमौ वर्तते। तदुच्यताम्।

**किं शीकरैः क्लमविमर्दिभिरार्द्रवातं**
**संचालयामि नलिनीदलतालवृन्तम्।**
**अङ्के निधाय चरणावुत पद्मताम्रौ**
**संवाहयामि करभोरु यथासुखं ते।। 3–25।।**

---

प्रियम्वदे[37], एष तपस्वी मृगपोतक इतस्ततो दत्तदृष्टिर्नूनं मातरं प्रभ्रष्टाम्[38] अनुसरति, तत् संयोजयाम्येनम्। तपस्वी तापसे दीन इति कोषः। सखि, चपलः खल्वेष नूनं, निवारयितुमेकाकिनी न पारयि{ष}ष्यसि, तदहमपि सहायत्वं करिष्यामि, तवेत्यर्थः। इतोऽन्यतो युवयोर्गमनं नानुमन्ये, त(य)तोऽसहायिन्यस्मि। त्वम् इदानीमस्यसहायिनी?, यस्याः समीपे पृथिवीनाथो वर्तते। कथं गते प्रियसख्यौ। आवेगः सखीजनोत्कण्ठा।

किं शी०।। (3–25) शीकरोऽम्बुकणाः सृता इत्यमरः। सञ्चारयामि करोमीत्यर्थः। नलिनीदलमेव तालवृन्तं व्यजनम्। उत अथवा, पद्मेति पद्मवल्लोहितौ। एतेन पद्मिनी[त्व]मस्याः [ध्वनितम्]। तदुक्तं–

मुखहस्तौ च पादौ च पद्मतुल्यं बिभर्ति या।
सर्वतः पद्मगन्धाढ्या पद्मिनी सा प्रकीर्तितेति।।

संवाहयामि पीडयामि। हे करभोरु, करभः प्राण्यङ्गं, तदिव ऊरुर्यस्याः शुभलक्षणमिदम्। तदुक्तम्-हस्तिहस्त-निभै-र्वृत्तैरच्छाभैः करभोपमैः। प्राप्नुवन्त्युरुभिः शश्वत् स्त्रियः सुखम् अनङ्गजमिति।। व्यजनं तालवृन्तक-मित्यमरः। मालाख्यं लक्षणमिदम्। तदुक्तम् माला स्यान्यदभीष्टार्थं नानार्थप्रतिपादनमिति। न माननीये-ष्वात्मानमपराधयिष्यामि। अपरीति अनपगततीव्रातपः निर्वाण-मस्तङ्गमनेन निर्वृतो गजमज्जने इति मेदिनी।

---

37. प्रियमुदे इति 4117 इत्यत्र पाठः।
38. प्रदृष्टाम् इति 4117 इत्यत्र पाठः।

**शकुन्तला**–ण माणणीएसुं अत्ताणअं अवराहइस्सं।

(न माननीयेषु आत्मानमपराधयिष्यामि।) (अवस्थासदृशमुत्थाय प्रस्थिता)

**राजा**–(अवष्टभ्य) सुन्दरि, अपरिनिर्वाणो दिवसः। इयं च ते शरीरावस्था।

**उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा।**
**कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः।। 3–26।।**

(इति धारयति)

**शकुन्तला**–मुञ्च मुञ्च। ण क्खु अत्तणो पहवामि। अधवा सहीमेत्तसरणा किं दाणिं एत्थ करइस्सं। (मुञ्च मुञ्च न खल्वात्मनः प्रभवामि। अथवा सखीमात्रशरणा किमिदानीमत्र करिष्यामि।)

**राजा**–धिक्। व्रीडितोऽस्मि।

**शकुन्तला**–ण क्खु अहं महाराअं भणामि। देव्वं उवालहामि। (न खल्वहं महाराजं भणामि। दैवमुपालभे।)

**राजा**–अनुकूलकारि दैवं किमुपालभ्यते।

**शकुन्तला**–कधं दाणिं ण उवालहिस्सं जं मं अत्तणो अणीसं परगुणेहिं लोहावेदी। (कथं इदानीं न उपालप्स्ये यत् मामात्मनः अनीशां परगुणैः लोभयति।)

**राजा**–(स्वगतम्)

**अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः**
**काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने।**
**आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वाद्**
**आबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः।। 3–27।।**

(शकुन्तला गच्छत्येव)

**राजा**–कथमात्मनः प्रियं न करिष्ये। (उपसृत्य पटान्तरमवलम्बते)

---

(3-26) इयं ग्रीष्मातपासहिष्णुः। परिबाधायां कोमलैर्दुःखासहैरित्यर्थः। अङ्गैर्विशिष्य।। मुञ्च मुञ्च, न खल्वात्मनः प्रभवामि। येन त्वन्मनोरथपूरणं क्रियते(क्रियेत) इति भावः। अथवा सखीमात्रशरणा किमिदानीम् अत्र करिष्यामीति। अतो यातुं देहीति बाह्यतः हृदयन्त्वभ्युपगम(तः?) एव। राज्ञः शैथिल्यशङ्कां निराचिकीर्षुराह–न खल्वहं महाभागं भणामि, दैवं प्राक्तनकर्म्म उपालभे निन्दामि। कथमिदानीं नोप(पा)लप्से, यदात्मनोऽनीशां मां परगुणैर्लोभयति।

अपि०।। (3-27) व्यतिकरः सम्पर्कः। मनसिजबाधे हेतुरयम्। अन्तरमवकाशः। अयं तु कुमारीबाधे हेतुः क्षिण्डे(प्ते)ति। अतिक्रान्तसुरतसमयाः। अन्योन्यं बाध्यबाधकतेत्यर्थः। काव्यलिङ्गमलंकारः।।

**शकुन्तला**–पोरव, रक्ख विणअं। इदो तदो इसीओ सञ्चरन्ति। (पौरव, रक्ष विनयम्। इतस्ततः ऋषयः सञ्चरन्ति।)

**राजा**–सुन्दरि, अलं गुरुजनाद्भयेन। न ते विदितधर्मा तत्रभवान् कण्वः खेदमुपयास्यति।

**गान्धर्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः।**
**श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः।। 3–28।।**

(दिशोऽवलोक्य) कथं प्रकाशं निर्गतोऽस्मि।

(शकुन्तलां हित्वा पुनस्तैरेव पदैः प्रतिनिवर्तते)

**शकुन्तला**–(पदान्तरे प्रतिनिवृत्य साङ्गभङ्गम्) पोरव, अणिच्छापूरओ वि संभासणमेत्तएण परिचिदो अअं जणो ण विसुमरिदव्वो।

(पौरव, अनिच्छापूरकोऽपि संभाषणमात्रकेण परिचितोऽयं जनः न विस्मर्तव्यः।)

**राजा**–सुन्दरि,

**त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे।**
**दिनावसानच्छायेव पुरोमूलं वनस्पतेः।। 3–29।।**

**शकुन्तला**–(स्तोकमन्तरं गत्वा आत्मगतम्) हद्धी हद्धी। इमं सुणिअ ण मे चलणा पुरोमुहा पसरन्ति। भोदु। इमेहिं पज्जन्तकुरुवएहिं ओवारिदसरीरा पेक्खिस्सं दाव से भावाणुबन्धं। (हा धिक् हा धिक्। इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः। भवतु एभिः पर्यन्तकुरबकैः अपवारितशरीरा प्रेक्षिष्ये तावदस्य भावानुबन्धनम्।)

(तथा कृत्वा स्थिता)

**राजा**–कथमेवं प्रिये अनुरागैकरसं मामुत्सृज्य निरपेक्षैव गतासि।

**अनिर्दयोपभोग्यस्य रूपस्य मृदुनः कथम्।**
**कठिनं खलु ते चेतः शिरीषस्येव बन्धनम्।। 3–30।।**

**शकुन्तला**–एदं सुणिअ णत्थि मे विहवो गच्छिदुं। (एतत् श्रुत्वा नास्ति मे विभवः गन्तुम्।)

---

पौरव, रक्ष विनयम्। इतस्तत ऋषयः सञ्चरन्ति। अत्रभवान् पूज्यः। गान्ध०।। (3–28) इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः।। इति मनुः। आख्याननामा नाट्यालङ्कारोऽयम्। तदुक्तम्–आख्यानं यत्र दृष्टान्तात् पुरावृत्तस्य कीर्तनमिति। प्रकाशं प्रकटं यथा स्यात्। प्रकाशश्चत्वरं, प्रकाशश्चत्वरे भासीति नानार्थ इति शङ्करः। पौरव, अनिच्छापूर्व(र)कोऽपि सम्भाषणमात्रेण परिचितोऽयं जनो न विस्मर्तव्यः। त्वं दूरमिति०।। (3–29) पुरोमूलं पूर्ववदिक्सम्बन्धिमूलं। पश्चिमदिक्सम्बन्धिमूलस्य च्छायं च्छायया परित्यागात्। वृक्षमात्रे वनस्पतिरिति कोषः। हा धिक् एतच्छ्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः। भवत(तु) एतैः पर्यन्तकुरबकैर्निकटबाणकुसुमैरम्लान–पुष्पैर्वापवारितशरीरा प्रेक्षिष्ये तावदस्य भावानुबन्धम्। अनि०।।

**राजा**–सम्प्रति प्रियाशून्ये किमस्मिन्करोमि। (अग्रतोऽवलोक्य) हन्त, व्याहतं गमनम्।

**मणिबन्धनगलितमिदं संक्रान्तोशीरपरिमलं तस्याः।**
**हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः।। 3–31।।**

(सबहुमानमादत्ते)

**शकुन्तला**–(हस्तं विलोक्य) अम्भो, दोव्वल्लसिढिलदाए परिब्भट्ठं पि मुणालवलअं मए ण परिण्णादं। (अम्भो, दौर्बल्यशिथिलतया परिभ्रष्टमपि मृणालवलयं मया न परिज्ञातम्।)

**राजा**–(मृणालवलयमुरसि निक्षिप्य) अहो स्पर्शः।

**अनेन लीलाभरणेन ते प्रिये**
**विहाय कान्तं भुजमत्र तिष्ठता।**
**जनः समाश्वासित एष दुःखभाग्**
**अचेतनेनापि सता न तु त्वया।। 3–32।।**

**शकुन्तला**–अदो वरं असमत्थ म्हि विलम्बिदुं। भोदु। एदेण ज्जेव अवदेसेण अत्ताणअं दंसइस्सं। (अतः परमसमर्थास्मि विलम्बितुम्। भवतु। एतेन तव अपदेशेन आत्मानं दर्शयिष्यामि।) (इत्युपसर्पति)

**राजा**–(दृष्ट्वा सहर्षम्) अये, जीवितेश्वरी मे प्राप्ता। परिदेवितानन्तरं प्रसादेनोपकर्तव्योऽस्मि खलु दैवस्य।

**पिपासाक्षामकण्ठेन याचितं चाम्बु पक्षिणा।**
**नवमेघोज्झिता चास्य धारा निपतिता मुखे।। 3–33।।**

---

(3-30) रूपस्य शरीरस्य बन्धनं वृन्तम्। रूपं स्वभावे सौन्दर्य्ये नालके पशुशब्दयोः। ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपीति मेदिनी। इदं श्रुत्वा नास्ति मे विभवः सामर्थ्यं गन्तुम्। मणि०।। (3-31) मणिबन्धनं करमूलम्। उषीरं वीरणमूलम्। निगडमिव बन्धशृङ्खलमिव। अम्मो विस्मये। दौर्बल्यशिथिलतया भ्रष्टमपि मृणाल-वलयं न मया परिज्ञातम्।

अनेन०।। (3-32) कान्तमपि भुजं त्यक्त्वात्रोरसि। अतः परमसमर्थौस्मि विलम्बितुम्। भवत्वनेनैवापदेशेन व्याजेनात्मानं दर्शयिष्यामि।

पिपा०।। (3-33) क्षामं क्षीणं पक्षिणां चातकेनार्थात्। आर्य, अर्द्धपथे स्मृत्वा शतस्य हस्तभ्रंशिनो[39] मृणालवलयस्य कृते निमित्तमागतास्मि। आख्यातमिव मे हृदयेन त्वया गृहीतमिति, तस्मान्निक्षिपैतत्। अदाने दोषमाह-मा[म् आ] त्मानञ्च मुनिजनेषु प्रकाशयिष्यसि। वलयशून्यं मदीयं करं विलोक्य मुनिजनानां वितर्को भावीति प्रकाशसम्भावनेति शङ्करः, तद्विचार्य्यम्। अभिसन्धिनाभिप्रायेण प्रत्यर्पयामि। केन पुनः। का गतिरुपायः भवत्वेवन्तावत्।

---

39. हस्तध्वंसिनो इति 4117 इत्यत्र पाठः।

**शकुन्तला**–(राज्ञः प्रमुखे स्थिता) अज्ज, अद्धपधे सुमरिअ एदस्स हत्थब्भंसिणो मुणालवलअस्स किदे पडिणिउत्त म्हि। आचक्खिदं विअ मे हिअएण तए गहिदं ति। ता णिक्खिव एदं, मा मं अत्ताणअं च मुणिअणेसुं पआसइस्ससि। (आर्य, अर्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनः मृणालवलयस्य कृते प्रतिनिवृत्तास्मि। आख्यातमिव मे हृदयेन त्वया गृहीतमिति। तत् निक्षिप एतत्, मा मामात्मानं च मुनिजनेषु प्रकाशयिष्यसि।)

**राजा**–एकेनाभिसन्धिना प्रत्यर्पयामि।

**शकुन्तला**–केण उण। (केन पुनः।)

**राजा**–यदिदमहमेव यथास्थानं निवेशयामि।

**शकुन्तला**–(आत्मगतम्) का गदी। (का गतिः।) (इत्युपसर्पति)

**राजा**–इतः शिलापट्टकमेव संश्रयाव। (इत्युभौ परिक्रम्योपविष्टौ)

**राजा**–(शकुन्तलाया हस्तमादाय) अहो स्पर्शः।

**हरकोपाग्निदग्धस्य, दैवेनामृतवर्षिणा।**
**प्ररोहः संभृतो भूयः, किं स्वित्कामतरोरयम्।। 3-34।।**

**शकुन्तला**–(स्पर्शं रूपयित्वा) तुवरदु तुवरदु अज्जउत्तो। (त्वरतां त्वरतामार्यपुत्रः।)

**राजा**–(सहर्षमात्मगतम्) इदानीमस्मि विश्वस्तः। भर्तुराभाषणपदमेतत्। (प्रकाशम्) सुन्दरि, नातिश्लिष्टः सन्धिरस्य मृणालवलयस्य। यदि तेऽभिप्रेतम् अन्यथा घटयिष्यामि।

**शकुन्तला**–(स्मितं कृत्वा) जधा दे रोअदि। (यथा ते रोचते।)

**राजा**–(सव्याजं विलम्ब्य प्रतिमुच्य) सुन्दरि। दृश्यताम्।

**अयं स ते श्यामलतामनोहरं**
**विशेषशोभार्थमिवोज्झिताम्बरः ।**
**मृणालरूपेण नवो निशाकरः**
**करं समेत्योभयकोटिमाश्रितः।। 3-35।।**

---

हर०।। (3-34) दैवेनादृष्टेन प्ररोहोऽङ्कुरः। स्विच्छब्दो वितर्के। काम एव भवति। त्वरताम् त्वरतो(ता)म् [आ]र्य्यपुत्रः। यथा ते रोचते। प्रतिमुच्य परिधाप्य। आयुक्तः प्रतिमुक्तश्च पिनद्धश्चापि नद्धवत् इत्यमरः।

अयं०।। (3-35) श्यामलता लताभेदः। विशेषेति एतेनाकाशचन्द्रमसोऽप्यस्या हस्तमृणालस्य सौन्दर्यमुक्तम्। करं ममैत्य प्राप्य उभयकोटिमाश्रितः। उभयात्र भागेन मिलित्वा मण्डलतां यात इत्यर्थः। नभसि कोटिद्वय-मिलनशोभा कदाचित्की, इह तु सार्व्वत्रिकी स्यादि(दिति) भावः।

न तु तावदुत्प्रेक्ष्ये। पवनोत्कम्पिना कर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः। ततोऽनुकम्पिता भवेयम्। किं पुनस्तेन विश्वसिमि। तत् कुर्व्वंश्चेद् अन्यदेव किमपि कुर्य्यास्तदा किं करोमीति भावः।

**शकुन्तला**–ण दाव णं पेक्खामि। पवणुक्कम्पिणा कण्णुप्पलरेणुणा कलुसीकिदा मे दिट्ठी। (न तावदेनं प्रेक्षे। पवनोत्कम्पिना कर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः।)

**राजा**–(सस्मितम्) यदि मन्यसे अहमेनां वदनमारुतेन विशदां करिष्ये।

**शकुन्तला**–तदो अणुकम्पिदा भवे। किं उण ण दे वीससामि। (ततः अनुकम्पिता भवेयम्। किं पुनः न ते विश्वसिमि।)

**राजा**–मा मैवम्। नवो हि परिजनः सेव्यानामादेशात्परं न वर्तते।

**शकुन्तला**–अअं जेव अच्चुवआरो अविस्सासजणओ। (अयमेव अत्युपचारः अविश्वासजनकः।)

**राजा**–(स्वगतम्) नाहमेतं रमणीयं सेवावकाशमात्मनः शिथिलयिष्ये। (इति मुखम् उन्नमयितुं प्रवृत्तः। शकुन्तला प्रतिषेधं रूपयन्ती विरमति।)

**राजा**–अयि मदिरेक्षणे, अलमस्मदविनयाशङ्कया। (शकुन्तला किंचिद् दृष्ट्वावनतमुखी तिष्ठति)

**राजा**–(अङ्गुलीभ्यां मुखमुन्नमय्यात्मगतम्)

**चारुणा स्फुरितेनायमपरिक्षतकोमलः।**
**पिपासतो ममानुज्ञां ददातीव प्रियाधरः।। 3–36।।**

**शकुन्तला**–पडिण्णादमन्थरो विअ अज्जउत्तो। (प्रतिज्ञामन्थरः इव आर्यपुत्रः।)

**राजा**–सुन्दरि, कर्णोत्पलसन्निकर्षाद् ईक्षणसादृश्यमूढोऽस्मि।

(इति मुखमारुतेन चक्षुः सेवते।)

**शकुन्तला**–भोदु। पइदित्थदंसण म्हि संवुत्ता। लज्जामि उण अणुवआरिणी पिअआरिणो अज्जउत्तस्स। (भवतु, प्रकृतिस्थदर्शनास्मि संवृत्ता। लज्जे पुनः अनुपकारिणी प्रियकारिणः आर्यपुत्रस्य।)

---

अयमेवात्यादरोऽविश्वासजनकः। प्रतिषेधं ना-ने-त्यादि। अवनतेति लज्जितेयं दृष्टिः। यदाह भरतः–किञ्चित् कुञ्चितपक्ष्माग्रापतितोर्ध्वपुटक्रिया। त्रपाधोमुखभावा च लज्जिता दृष्टिरिष्यते इति।। चारुणेति०।। (3-36) स्फुरितं कम्पः। अधरस्फुरणं वल्लभसम्भोग चिह्नमिति केचित्। आकाङ्क्षा नाट्यालंकारोऽयम्। तदुक्तम्–आकाङ्क्षा रमणीयत्वाद्वस्तुनो या मा स्पृशतु सेति। प्रतिज्ञामन्थर इवार्य्यपुत्रः। मुखमारुतेन दृष्टिरेव विशदीकार्य्या। तत् कथमधरे मुखनिवेशावष्टम्भ इति भावः। कौ(कै)शिकी भेदोऽयं नर्म्मस्फुटः। यदाह–नायिकायाश्च नेतुश्च यदेकान्ते परस्परम्। सम्भोगानुमतं वाक्यं नर्म्मस्फोटः स कथ्यते।। इति शङ्करः। भवतु प्रकृतिस्थदर्शनास्मि संवृत्ता। लज्जे पुनरनुपकारिणी उपकारिणः प्रियकारिणो वा आर्य्यपुत्रस्य।

इदं०।। (3-37) ननु निश्चये, न त्विति शङ्करः। तेनालिङ्गनमपि देहीति भाव इति व्याचष्टे

**राजा**–सुन्दरि, किमन्यत्।

**इदमप्युपकृतिपक्षे सुरभि मुखं ते मया यदाघ्रातम्।**
**ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण।। 3–37।।**

**शकुन्तला**–असंतोसे उण किं करेदि। (असंतोषे पुनः किं करोति।)

**राजा**–इदमिदम्। (इति व्यवसितो, वक्त्रं ढौकते।)

(नेपथ्ये)

चक्कवाअवहु। आमन्तेहि सहअरं। उवत्थिदा रअणी।

(चक्रवाकवधु, आमन्त्रय सहचरम्, उपस्थिता रजनी।)

**शकुन्तला**–(कर्णं दत्त्वा ससंभ्रमम्) अज्जउत्त। एसा खु तादकण्णस्स धम्मबहिणी कणीअसि अज्जा गोदमी मम वुत्तन्तोवलम्भणणिमित्तं आअदा। ता विडवन्तरिदो होहि। (आर्यपुत्र, एषा खलु मम वृत्तान्तोपलम्भननिमित्तम् आर्या गौतमी आगता। तत्विटपान्तरितः भव।)

**राजा**–तथा। (इत्येकान्ते स्थितः)

प्रविश्य पात्रहस्ता **गौतमी**–जाद, इदं सन्तिउदअं। (दृष्ट्वा समुत्थाप्य) असुत्था इध देवदासहाइणी चिट्ठसि। (जात, इदं शान्त्युदकम्। अस्वस्था इह देवतासहायिनी तिष्ठसि।)

**शकुन्तला**–इदाणिं जेव पिअंवदाअणुसूआओ मालिणिं ओदिण्णाओ। (इदानीं एव प्रियंवदानुसूये मालिनीमवतीर्णे।)

---

दृष्टान्तः। शकुन्तलापि सम्भोगाय सव्याजमाह। असन्तोषे पुनः किं करोति। मधुकर इत्यर्थात्। इदमित्यधरपानाद्यभिनयं कुर्वन्। शकुन्तला वक्त्रं ढौकते गूहति। कौ(कै)शिकीवृत्तङ्ग नर्म्मभेदोऽयं शृङ्गारहास्यविहितः। तदुक्तम्–वैदग्ध्यक्रीडितं नर्म्म इष्टजनावर्तनं कृत्तच्च त्रिविधं मतम्। विदूषा हास्येन केवलेन तु विहित शृङ्गारभीतियुक्तेन। शङ्करस्तु "इदम्" इति व्यवसितो यत्नं कर्तुमुद्यत इत्यर्थः। शकुन्तला कर्त्री वक्त्रं ढौकते, पिधत्त इत्यर्थः। न तु चुम्बतीत्यर्थः। आ न मे "कथमभ्युन्नमितं न चुम्बितं तदि"ति विरोधात्। एवञ्च भरते साक्षाच्चुम्बननिषेधाच्च। तदुक्तम् न कार्यं शयनं रङ्गे नाट्ययोगमपेक्षता। केनचिद्व्यपदेशेन तद्विच्छेदञ्च कारयेत्।। यदि स्वपेद् अर्थवशात् पुरुषः सहितः स्त्रिया। न तत्र चुम्बनं कुर्य्यान्निर्व्याजालिङ्गनं न चेति।। नेपथ्य इति। चूलिकाख्यो[र्थो]पक्षेपकभेदः। चक्रवाकवधूरामन्त्रयति सहचरं "उपस्थिता रजनी"। अथ च प्रकृतविघ्नकारित्वाद् रजनीव रजनी गौतमी। तत्प्रवेश(शः) सख्यौ सूचितवत्यौ।। ससंभ्रममिति संभ्रमं त्रयम् इच्छन्ति, भयमुद्वेगमादरमिति कोषः। गौतमीजाने(ज्ञाने)[40] भयं, वल्लभा[ला]पो दुर्लभ इत्युद्वेगः।

उपजीव्यागमनमित्यादरः। आर्य्यपुत्र, एषा खलु तातकण्वस्य धर्म्मभगिनी क{र}णीयसीवार्य्या गौतमी मम प्रवृत्तान्तोपलम्भननिमित्तमागता, तद्विटपान्तरितो भव। जाते पुत्रि, जातशब्देनापत्यमात्रमुच्यते।

---

40. गौतमीजाने इति 4118 इत्यत्र।

**गौतमी**–(शान्त्युदकेन शकुन्तलामभ्युक्ष्य) जाद, णिराबाधा मे चिरं जीव। अवि लहुसंतावाइं दे अङ्गाइं। (जात, निराबाधा मे चिरंजीव। अपि लघुसन्तापानि ते अङ्गानि।) (इति स्पृशति)

**शकुन्तला**–अज्जे, अत्थि विसेसो। (आर्ये, अस्ति विशेषः।)

**गौतमी**–परिणदो दिअसो। ता एहि। उडअं जेव गच्छम्ह। (परिणतः दिवसः। तदेहि। उटजमेव गच्छावः।)

**शकुन्तला**–(कथं चिदुत्थायात्मगतम्) हिअअ, पढमं जेव सुहोवणदे मणोरधे कालहरणं करेसि। संपदं अणुभव दाव दे किदं। (पदान्तरे प्रतिनिवृत्य, प्रकाशम्) लदाहरअ संतावहारअ। आमन्तेमि तुमं पुणो वि परिभोअत्थं। (हृदय, प्रथममेव सुखोपनते मनोरथे कालहरणं करोषि। साम्प्रतमनुभव तावत्ते कृतम्। लतागृहक, सन्तापहरक। आमन्त्रयामि त्वां पुनः अपि परिभोगार्थम्।)

(इति निष्क्रान्ते)

**राजा**–(पूर्वस्थानमुपेत्य सनिःश्वासम्) अहो, विघ्नवत्यः प्रार्थितसिद्धयः।

**मुहुरङ्गुलिसंवृत्ताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।**
**मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं, न चुम्बितं तत्।। 3-38।।**

क्व नु खलु सम्प्रति गच्छामि। अथवा इहैव प्रियापरिभुक्ते लतामण्डपे मुहूर्तं तिष्ठामि।

---

जाते इति शङ्करः। इदं शान्त्युदकम्, शान्तिर्भद्रं, तदर्थमुदकम्। असुस्थात्र देवतासहायिनी एकाकिनी तिष्ठसि। इदानीमेव प्रियमु(यंव)दानुसूये मालिनीमवतीर्णे।

"एवस्य जे{ज}व"ति[41] प्राकृतसूत्रादन्तस्त्वावदीय पिण्ड इत्यवधेयम्। निराधारा, त्वं चिरं जीव। अपि लघु सन्तापानि तेऽङ्गानि। अपि प्रश्ने। आर्य्य अस्ति विशेषः। परिणतो दिवसस्तदेहि उटजं गच्छावः। हृदय प्रथमं सुखोपनते मनोरथे कालहरणं करोषि। कृतवदसि साम्प्रतमनुभव तावत्ते कृतं, स्वयं कृतमनुभूयतामित्यर्थः।

मुहुः०।। (3-38) प्रतिषेधाक्षरं प्रतिषेधमक्षरं, "न ममाधरम् उन्नमये"त्यादि वर्णस्तेन यद्वैक्लव्यम्। तेनाभिरामं[42], बालास्वभावात् प्रतिषेधाक्षरं प्रमदास्वभावाच्च तदभिधाने क्लेशात् ब्रूम इत्यन्ये। अंसविवर्ति तिर्यक्कृतं प्रशस्तपक्ष्मयुक्तम् अक्षि यस्याः तदपि निर्वचनीयम्।

दर्पणकारस्तु "न चुम्बितं त्वि"ति पठित्वा, "तु" इति निपातस्यानुतापव्यञ्जकत्वमित्याह। पक्ष्मलत्वञ्च चक्षुषः शुभावहम्। तदुक्तं भविष्ये–नीलोत्पलदलप्रख्यै–राताम्रैश्चारु पक्ष्मभिः। वनितानयनैरेभि–र्भाग्यसौभाग्यभागिनीति।

तस्याः०।। (3-39) शरीरेति देह संघुष्टा बिसाभरणं मृणालवलयमित्यनेन प्रकारेणासक्ती भवदीक्षणं यस्य। वह०।। मम मूढं कर्तु व्याकर्तव्यज्ञानशून्यं चित्तम् इति गणयति चिन्तयति यदा

41. सूत्रमिदं वररुचिप्रणीते प्राकृतप्रकाशे 12-13 क्रमांके दृश्यते।
42. तेनाभिभवायं इति 4117 इत्यत्र।

(सर्वतो विलोक्य)

**तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं**
**कान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।**
**हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो**
**निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि।। 3–39।।**

(विचिन्त्य) अहो धिक्, असम्यक् चेष्टितं प्रियां समासाद्य कालहरणं कुर्वता मया। तदिदानीं–

**रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुनः-**
**र्न कालं हास्यामि प्रकृतिदुरवापा हि विधयः।**
**इति क्लिष्टं विघ्नैर्गणयति च मे मूढहृदयं**
**प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव।। 3–40।।**

(नेपथ्ये) भो भो राजन्।

**सायन्तने सवनकर्मणि संप्रवृत्ते**
**वेदीं हुताशनवतीं परितः प्रकीर्णाः।**
**छायाश्चरन्ति बहुधा भयमादधानाः**
**सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम्।। 3–41।।**

**राजा**–(आकर्ण्य सावष्टम्भम्) भो भोस्तपस्विनः। मा भैष्ट। अयमहमागतोऽस्मि।

(इति निष्क्रान्तः)

।। इति तृतीयोऽङ्कः।।

---

विघ्नैर्व्याकुलं सत् प्रियायाः शकुन्तलायाः प्रत्यक्षं संमुखे किमप्यनिर्वाच्यं तथावृत्तं परिभोगानुभवप्रकारेण कातरमिव[43]। चिन्तामेवाह। यदि०।। (3–40) सा मुखी रहो निर्जने, पुनः प्रत्यासत्तिं सान्निध्यं यास्यति, तदा न कालं हास्यामि, न विलम्बं करिष्यामीत्यर्थः। शङ्करस्तु कालं सम्भोगसमयं न त्यक्ष्यामीत्याह। हि यस्मात् विषयाः स्रक्–चन्दन–वनितादयः स्वभावदुर्लभा भवन्ति। किमिव हि पाठे इवशब्दो वाक्यालङ्कारे। प्रियाप्रत्यक्षं। पश्चात्तापनामा नाट्यालङ्कारोऽयम्। तदुक्तं–पश्चात्तापोऽनुतापश्च कृत्वा वाक्यान्तरं भवेदिति।

सायं०।। (3–41) सायन्तने सन्ध्याकालीने सवनकर्मणि यज्ञक्रियायां संप्रवृत्ते कर्तुमारब्धे, आदिकर्मणि क्तः"। वेदीं० परितः वेद्याः सर्वत्रेत्यर्थः। अभितः परितः इत्यादिना षष्ठ्यर्थे द्वितीया। बहुधानेकप्रकारेण चरन्ति भ्रमन्ति सन्ध्याकाल–मेघसमूह पिङ्गलानां च्छायाः। सवनं त्वध्वरे स्नाने इति मेदिनी। अनेन–पराद्भाव(?)भावः।। ।।

**।। इति तृतीयोऽङ्कः।।**

—•—

---

43. 4117 इत्यत्र शतरमिव इति पठ्यते।

## ।। चतुर्थोऽङ्कः ।।

(ततः प्रविशतः कुसुमावचयनमभिनयन्त्यौ सख्यौ)

**अनुसूया**–पिअंवदे, जइ वि गन्धव्वेण विवाहेण णिव्वुत्तकल्लाणा पिअसही सउन्तला अणुरूवभत्तुभाइणी संवुत्ता तधा वि ण मे णिव्वुदं हिअअं। (प्रियंवदे, यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता, तथापि न मे निर्वृतं हृदयम्।)

**प्रियंवदा**–कधं विअ। (कथमिव।)

**अनुसूया**–अज्ज सो राएसी इट्ठिपरिसमत्तीए इसीहिं पेसिदो अत्तणो णअरं पविसिअ अन्तेउरिआसदसमागदो इमं जणं सुमरेदि ण व त्ति। (अद्य सः राजर्षिः इष्टिसमाप्तौ ऋषिभिः प्रेषितः आत्मनः नगरं प्रविश्यान्तःपुरिकाशतसमागतः इमं जनं स्मरति न वा इति।)

**प्रियंवदा**–एत्थ दाव वीसत्था होहि। ण हि तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति। एत्तिकं उण चिन्तणीअं। तादो तित्थजत्तादो पडिणिउत्तो इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति। (अत्र तावत् विश्वस्ता भव। न हि तादृशाः आकृतिविशेषाः गुणविरोधिनः भवन्ति। एतावत् पुनः चिन्तनीयम्। तातः तीर्थयात्रातः प्रतिनिवृत्तः इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यते इति।)

**अनुसूया**–जधा मं पुच्छसि तधा अहिमदं तादस्स। (यथा मां पृच्छसि तथा अभिमतं तातस्य।)

**प्रियंवदा**–कधं विअ। (कथं इव।)

**अनुसूया**–किं अण्णं। वरस्स अणुरुवस्स कण्णआ पडिवादणीअअ त्ति अअं दाव पढमो संकप्पो। तं जइ देव्वं जेव सम्पादेदि णं कदत्थो गुरुअणो। (किमन्यत्। वरस्य अनुरूपस्य कन्यका प्रतिपादनीया इति अयं तावत् प्रथमः सङ्कल्पः। तं यदि दैवमेव सम्पादयति, ननु कृतार्थः गुरुजनः।)

---

### ।। चतुर्थोऽङ्कः ।।

प्रियंवदे[44], यद्यपि गान्धर्वेण विवाहेन निवृत्तकल्याणा प्रियसखी शकुन्तलानुरूप-भर्तृभगिनी संवृत्ता, तथापि न निर्वृतं मे हृदयम्। कथमिव किमिति वा। अद्य सा राजर्षिरिष्टिपरिसमाप्तौ ऋषिभिः प्रेषितमात्मनो नगरं प्रविश्यान्तःपुरिकाशतसमागमादिमं जनं स्मरति न वेति। अन्तःपुरशब्देन कलत्रमुच्यते।

अत्र तावद् विश्रब्धा। निःशङ्का भव। न हि तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति। एतावत् पुनश्चिन्तनीयं तातस्तीर्थयात्रातः प्रतिनिवृत्तः, इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यते इति। यदि मां पृच्छसि तदानुमतमिदं तातस्य भविष्यति। कथमिव। किमन्यद् अनुरूपाय कन्या प्रतिपादनीयेति अयं तातसङ्कल्पः। तं यदि दैवमेव सम्पादयति, ननु कृतार्थो गुरुजनः।

---

44. मातृका 4117 इत्यत्र प्रियमुदे इति पठ्यते।

**प्रियंवदा**–एवं णेदं। (पुष्पभाजनं विलोक्य) सहि, अवचिदाइं बलिकम्मपज्जत्ताइं खु कुसुमाइं। (एवं नु एतत्। सखि, अवचितानि बलिकर्मपर्याप्तानि खलु कुसुमानि।)

**अनुसूया**–णं सउन्तलाए वि सोहग्गदेवदाओ अच्चिदव्वाओ। ता अवराइं पि अवचिणम्ह। (ननु शकुन्तलया अपि सौभाग्यदेवताः अर्चितव्याः। तत् अपराण्यपि अवचिनवाव।)

**प्रियंवदा**–जुज्जदि। (युज्यते।) (उभे तदेव कर्माभिनयतः।)

(नेपथ्ये) अहमहं भोः .....।

**अनुसूया**–(कर्णं दत्त्वा) सहि, अदिधिणा विअ णिवेदिदं। (सखि, अतिथिना इव निवेदितम्।)

**प्रियंवदा**–णं उडए संणिहिदा सउन्तला। (विचिन्त्य) आं अज्ज उण असंणिहिदा हिअएण। तेण हि भोदु एत्तिकेहिं कुसुमेहिं पओअणं। (ननु उटजे सन्निहिता शकुन्तला। आमद्य पुनः असन्निहिता हृदयेन। तेन हि भवतु एतावद्भिः कुसुमैः प्रयोजनम्।) (इति प्रस्थिते)

(पुनर्नेपथ्ये) आः ....... कथमतिथिं मां परिभवसि।

**विचिन्तयन्ती यमनन्यमानसा**
**तपोनिधिं वेत्सि न मामुपस्थितम्।**
**स्मरिष्यति त्वां न स बोधितोऽपि सन्**
**कथां प्रमत्तः प्रथमं कृतामिव।। 4-1।।**

(उभे श्रुत्वा विषण्णे)

**प्रियंवदा**–हद्धी हद्धी। तं जेव संवुत्तं। कस्सिं पि पूआरिहे अवरद्धा सुण्णहिअआ पिअसही। (हा धिक् हा धिक्, तदेव संवृत्तम्। कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया प्रियसखी।)

**अनुसूया**–(पुरोऽवलोक्य) सहि, ण क्खु जस्सिं कस्सिं वा। एसो दुव्वासा सुलहकोवो महेसी। तधा अअं विरलपादुद्धाराए गदीए पडिणिउत्तो।

---

एवमेतत् सखि, अवचितानि[45] बलिकर्म[46] पर्याप्तानि कुसुमानि[47]। इदानीं गन्तुम् अर्हसीति भावः। ननु शकुन्तलया सौभाग्यदेवता अर्चनीया, तदपरान्यवचिन्ववः। युज्यते। अतिथिनेव निवेदितम्। ननूटजे सन्निहिता शकुन्तला। आं स्मृतौ। अद्य पुनरसन्निहिता हृदयेन, तेन हि भवत्वेतैः कुसुमैः प्रयोजनम्।।

विचि०।। (4-1) यत् स्यादनुचितं वस्तु नायकस्य रसस्य वा। विरुद्धं तत् परित्याज्यम्

---

45. मातृका 4118 इत्यत्र अन्वचितानि इति पठ्यते।
46. मातृका 4117 इत्यत्र वणिककर्म० इति पठ्यते।
47. मातृका 4117 इत्यत्र दस्वमानि इति पठ्यते।

(सखि, न खलु यस्मिन् कस्मिन्वा। एषः दुर्वासा सुलभकोपो महर्षिः। तथा अयं विरलपादोद्धारया गत्या प्रतिनिवृत्तः।)

**प्रियंवदा**–को अण्णो हुदवहादो दहिदुं पहवदि। ता गच्छ। पादेसुं पडिअ णिअत्तावेहि जाव से अहं पि अग्धोदअं उवकप्पेमि। (कोऽन्यः हुतवहाद् दग्धुम् प्रभवति। तद्गच्छ। पादयोः पतित्वा निवर्तय यावद् अस्याहमप्यर्घोदकं उपकल्पयामि।)

**अनुसूया**–तधा। (तथा।) (इति निष्क्रान्ता)

**प्रियंवदा**–(पदान्तरे स्खलितं रूपयन्ती) अम्मो, आवेअक्खलिदाए पब्भट्ठं मे अग्गहत्थादो पुप्फभाअणं। (अम्मो, आवेगस्खलितायाः प्रभ्रष्टं मे अग्रहस्तात् पुष्पभाजनम्।)

(नाट्येन पुष्पावचयं विधत्ते।)

**अनुसूया**–(प्रविश्य) सहि, सरीरी विअ कोवो कस्स सो अणुणअं गेण्हदि। किं चि उण साणुकम्पो किदो। (सखि, शरीरी इव कोपः, कस्य सः अनुनयं गृह्णाति। किंचित् पुनः सानुकम्पः कृतः।)

**प्रियंवदा**–एदं जेव तस्सिं बहुदरं। ता कधेहि। (एतदेव तस्मिन् बहुतरम्। तत्कथय।)

**अनुसूया**–जदो णिअत्तिदुं णेच्छदि तदो पादेसुं पणमिअ विण्णाविदो मए। भअवं। पढमभत्तिं अवेक्खिअ अज्ज तुह अविण्णादपहावपरमत्थस्स दुहिदाजणस्स भअवदा अअं अवराहो मरिसिदव्वो त्ति। (यतः निवर्तितुं नेच्छति ततः पादयोः प्रणम्य विज्ञापितः मया। भगवन्, प्रथमभक्तिमवेक्ष्य अद्य तव अविज्ञातप्रभावपरमार्थस्य दुहितृजनस्य भगवता अयमपराधः मर्षितव्यः इति।)

---

अन्यथा वा प्रकल्पयेदिति भरतनियमस्तेनात्र दुःस्व(ष)न्तस्य शकुन्तलाविस्मरणं कृत्रिममप्यनुचितं इत्यन्यथाकृतम्। शङ्करस्तु संविधान-नामाख्य-नाट्यालंकारोऽयम्। तदुक्तम्-

रसभावानुकूलाय कथासूत्रं यदन्यथा क्रियते। तदिह प्रोक्तं मुनिभिः संविधानकम्।।

इत्याह। हा धिक्, हा धिक् तदेव संवृत्तं, कस्मिन्नपि पूजार्हेऽपराद्धा।

शून्यहृदया प्रियसखी। सखि, न खलु यस्मिन् तस्मिन् वा। एष खलु सुलभकोपो दुर्वासा महर्षिः। तथा पूर्वानुभूत-प्रकारेण अयं अविरला निरवकाशा त्वरिता च ईदृश्या गत्या प्रतिनिवृत्तः। विरल पादपधारया गत्येति च पाठः। कोऽन्यो हूतवहा[द्]दग्धुं प्रभवति। तद् गच्छ, पादयोः पतित्वा निवर्त्तय। अर्थादेनं यावदहमस्यार्घोदकमुपकल्पयामि।

अम्मो, काष्ठ विस्मये वा। आवेगस्खलितायाः प्रभ्रष्ठमग्रहस्तान्मे कुसुमभाजनम्[48]। शरीरीव कोपः, कस्य सोऽनुनयं गृह्णाति। किञ्चित् पुनः सानुकम्पः कृतः। एतदेव तस्मिन् बहुतरं, तत् कथय कथं प्रसादित इत्यर्थः।

सखि, स यदि कथमपि निर्वर्तितुं नेच्छति, तदा पादयोः प्रणिपत्य विज्ञापितो मया, "भगवन् प्रथमभक्तिम् अवेक्ष्य, अद्य तवाविज्ञात-प्रभाव-परमार्थस्य दुहितृजनस्य भगवता अयं प्रथमापराधो मर्षितव्य" इति।

48. मातृका 4117 इत्यत्र दस्वभाजनम् इति पठ्यते।

**प्रियंवदा**–तदो तदो। (ततस्ततः।)

**अनुसूया**–तदो सो ण मे वअणं अण्णधा भविदुं अरिहदि। किं तु अहिण्णाणाहरणदंसणादो से सावो णिअत्तिस्सदि त्ति मन्तअन्तो ज्जेव अन्तरिदो। (ततः सः न मे वचनमन्यथा भवितुमर्हति। किं तु अभिज्ञानाभरणदर्शनादस्याः शापः निवर्तिष्यते इति मन्त्रयन् एवान्तरितः।)

**प्रियंवदा**–सक्कं दाणिं अस्ससिदुं। अत्थि तेण राएसिणा संपत्थिदेण अत्तणो णामाङ्किदं अङ्गुलीअअं सुमरावणीअं ति सउन्तलाहत्थे सअं जेव पिणद्धाविदं। एसो ज्जेव तस्सिं साहीणो उवाओ भविस्सदि। (शक्यमिदानीमाश्वासितुम्। अस्ति तेन राजर्षिणा सम्प्रस्थितेनात्मनः नामाङ्कितमङ्गुरीयकं स्मरणीयमिति शकुन्तलाहस्ते स्वयमेव पिनद्धम्। तदेषः एव तस्मिन्स्वाधीनः उपायः भविष्यति।)

**अनुसूया**–एहि। देवकज्जं दाव से णिव्वत्तम्ह। (एहि, देवकार्यं तावदस्याः निवर्तयाव।) (इति परिक्रामतः)

**प्रियंवदा**–(विलोक्य) अनुसूये, पेक्ख दाव वामहत्थविणिहिदवअणा आलिहिदा विअ पिअसही तग्गदाए चिन्ताए अत्ताणअं पि ण विभावेदि। किं उण अदिधिविसेसं। (अनुसूये, प्रेक्षस्व तावत् वामहस्तविनिहितवदना आलिखिता इव प्रियसखी तद्गतया चिन्तया आत्मानमपि न विभावयति। किं पुनः अतिथिविशेषम्।)

**अनुसूया**–पिअंवदे, दोण्णं जेव णो हिअए एसो वुत्तन्तो चिट्ठदु। रक्खणीआ खु पइदिपेलवा पिअसही। (प्रियंवदे, द्वयोः एव नौ हृदये एषः वृत्तान्तः तिष्ठतु। रक्षणीया खलु प्रकृतिपेलवा प्रियसखी।)

**प्रियंवदा**–को दाव उण्होदएण णोमालिअं सिञ्चदि।(को तावदुष्णोदकेन नवमालिकां सिञ्चति)

(इत्युभे निष्क्रान्ते)

(प्रवेशकः)

---

ततस्तत इति कथक प्रोत्साहनार्थः। ततः स "न मे वचनमन्यथा भवितुमर्हति। किन्त्वाभरणाभिज्ञानदर्शनाद् अस्याः शापो निवर्तिष्यत" इति मन्त्रयन्नेवान्तर्हितः।

शक्यमिदानीमाश्वसितुं अस्ति, तेन राजर्षिणा संप्रस्थितेनात्मनो नामाङ्कितम् अङ्गुरीयकं स्मरणीय[मि]ति शकुन्तलाया हस्ते स्वयमेव पिनद्धम्। तदेष एव तस्मिन् स्वाधीन उपायो भविष्यति। एहि, अस्या देवकार्यं तावन्निवर्तयावः। अनुसूये, प्रेक्षस्व तावत् वामहस्तविनिहितवदनालिखितेव प्रियसखी तद्गतया चिन्तया आत्मानमपि न विभावयति, किं पुनरतिथिविशेषम्। प्रियम्वदे[49], द्वयोरेवावयोर्हृदय एष शापवृत्तान्तस्तिष्ठतु, रक्षणीया खलु प्रकृतिपेलवा प्रियसखी[50]। कस्तावदुष्णोदकेन नवमालिकां सिञ्चति। अत्र प्रवेशक इति शङ्करः।।

49. मातृका 4117 प्रियमुदेति पठ्यते।

50. मातृका 4117 इत्यत्र नास्ति।

(ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः)

शिष्यः–वेलोपलक्षणायादिष्टोऽस्मि प्रभासात्प्रतिनिवृत्तेन तत्रभवता कण्वेन। तत्प्रकाशं निर्गत्यावलोकयामि किमवशिष्टं रजन्या इति।

(परिक्रम्यावलोक्य च)

हन्त प्रभातम् ........। तथा हि–

**यात्येकतोऽस्तशिखरं पतिरोषधीना-**
**माविष्कृतोऽरुणपुरःसर एकतोऽर्कः।**
**तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां**
**लोको नियम्यत इवैव दशान्तरेषु।। 4-2।।**

अपि च–

**अन्तर्हिते शशिनि सैव कुमुद्वती मे**
**दृष्टिं न नन्दयति संस्मरणीयशोभा।**
**इष्टप्रवासजनितान्यबलाजनेन**
**दुःखानि नूनमतिमात्रदुरुद्धानि।। 4–3।।**

अपि च–

**कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या**
**दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः।**
**वेदिप्रान्तात्खुरविलिखितादुत्थितश्चैष सद्यः**
**पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः।। 4-4।।**

अपि च–

**पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः**
**क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः।**

---

या० (4-2) आविष्कृतेत्युदय उक्तः। तेजोद्वयस्य सूर्यचन्द्ररूपोभयतेजसः एककालं विपदुपचयाभ्यां दशावकाशेषु लोकः स्थिरीक्रियत इव, व्यसनोदयाभ्यामिति।

अनुधर्मादिपाठाद् विकल्पेन पूर्वनिपातः। विपत्तावशुभे पापो मानस्त्रिमृगयादिषु। दैवानिष्ट-कलासक्तौ व्यसनं कवयो विदुरिति शाश्वतः। एतेन शकुन्तलाया अपि व्यसनोदयौ भविष्यत इति सूचितमिति शङ्करः।

अन्तर्हि०।। (4-3) इष्टो वल्लभस्तस्य प्रवासो भिन्नदेशत्वम्। नूनं निश्चये। अतिमात्रमतिशयः। अर्थान्तरन्यासः। दृष्टान्त इति शङ्करः। अनेन चापदेशेन शकुन्तलाविरहदुःखममिह सूचितमिति शङ्करः।

कर्कन्धु०।। (4-4) कर्कन्धुर्बदरी, तुहिनं हिमं, अग्रसन्ध्या प्रातःसन्ध्या, उटजः पर्णशाला, पटलं च्छदिः समूह इत्यर्थः। वेदिः परिष्कृता भूमिः। स्वाङ्गमायच्छमानं दीर्घीकुर्वन् आकर्षन्नित्यर्थः।

**सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखै-**
**रत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा।।4–5।।**

प्रविश्यापटीक्षेपेण **अनुसूया**–(स्वगतम्) एवं पि णाम विसअपरंमुहस्स जणस्स एदं णिवडिदं जधा तेण रण्णा सउन्तलाए अणज्जं आचरिदं ति। (एवमपि नाम विषयपराङ्-मुखस्य जनस्य एतत् निपतितं यथा तेन राज्ञा शकुन्तलायामनार्यमाचरितमिति।)

**शिष्यः**–यावदुपस्थितां होमवेलां गुरवे निवेदयामि। (इति निष्क्रान्तः)

**अनुसूया**–णं पहादा रअणी। ता लहुं पडिबुद्ध म्हि। अधवा पडिबुद्धा वि किं करइस्सं ण मे उइदेसुं पि पहादकरणीएसुं हत्था पसरन्ति। सकामो दाणिं कामो भोदु जेण सुद्धहिअआ पिअसही असच्चसन्धे जणे पदं कारिदा। अधवा ण तस्स राएसिणो अवराहो। दुव्वासासावो क्खु एसो पहवदि। अण्णधा कधं दाणिं सो राएसी तादिसाइं मन्तिअ एत्तिकस्स कालस्स वाआमेत्तकं पि ण विसज्जेदि। (विचिन्त्य) ता इदो अहिण्णाणङ्गुलीअअं से विसज्जामो त्ति। अधवा णिद्दुक्खसीदले तवस्सिअणे को णाम अब्भत्थीअदु। ण अ सहीगामी दोसो त्ति कदुअ ववसिदाओ वि पारेमो तादकण्णस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्तलं णिवेदिदुं। ता एत्थ दाणिं किं णु क्खु अम्हेहिं करणीअं। (ननु प्रभाता रजनी। तत् लघु प्रतिबुद्धास्मि।

---

पाद०।। (4–5) पादो रश्मिश्चरणश्च मूर्द्ध्नि उपरि शिरसि च तमो, तमोऽन्धकारोऽज्ञानञ्च मध्यमं स्थानमाकाशमत्यारूढ[51]श्च गुरुशिरसि पादन्यासो विष्णुस्थानातिक्रमणञ्च। अपभ्रंशेति अधःपातः। अर्थान्तरन्यासः। अथ च शकुन्तलाया दुर्वासस्यानवधानाद् भ्रंशो भविष्यतीति सूचनमिति शङ्करः।

अपटीक्षेपेणाकस्मादित्यर्थः। पटीक्षेपो न कर्तव्य आर्त–राजप्रवासयो–रिति भरतः। एवमपि नाम विषय–पराङ्मुखस्य जनस्य एवं इदम्द्धा[52] (न विदितं) निपातितम्। यथा तथाविधेन राजर्षिणा शकुन्तलाया अनार्य्यम् आचरितमिति। अनार्य्यमनुचितं शकुन्तला–विस्मरणरूपम्।।

ननु प्रभातवेला! तन्निद्रां त्यजामि। तत् प्रतिबु(द्ध)न(?)। अथवा प्रतिबुद्धापि किमिदानीं करिष्यामि। न मे उचितेष्वपि प्रभातकरणीयेषु हस्तौ प्रसरतः। तत् सकाम इदानीं कामो भवतु, येन शून्यहृदया प्रियसखी असत्यसन्धे मिथ्याप्रतिज्ञे तस्मिन् जने पदं स्थानं व्यवसायं वा कारिता। पदं व्यवसित (स्थानमिति?), त्राणस्थानलक्ष्माङ्घ्रिवस्त्वित्यमरः।।

अथवा दुर्वाससः शापः खल्वेष भवति। अन्यथा कथं राजर्षिस्तादृशं "नगरगमन एव भवन्नयनार्थं मानुषः प्रहेय" इत्यादिना मन्त्रयित्वा एतावतः कालस्य वार्तामात्रमपि अस्तु तावद्, गूढद्रव्यादि न विसर्जयति।

---

51. मत्यारूढिश्च इति 4118 इत्यत्र पठ्यते।
52. 4118 इत्यत्र इदसा।

अथवा प्रतिबुद्धापि किं करिष्यामि। न मे उचितेष्वपि प्रभातकरणीयेषु हस्तौ प्रसरतः। सकामः इदानीं कामः भवतु येन शुद्धहृदया प्रियसख्यसत्यसंधे जने पदं कारिता। अथवा न तस्य राजर्षेः अपराधः। दुर्वाससः शापः खल्वेषः प्रभवति। अन्यथा कथमिदानीं सः राजर्षिः तादृशानि मन्त्रयित्वा एतावतः कालस्य वाङ्मात्रकमपि न विसर्जयति। तत् इतः अभिज्ञानाङ्गुरीयकमस्य विसर्जयामः इति। अथवा निर्दुःखशीतले तपस्विजने को नाम अभ्यर्थ्यताम्। न च सखीगामी दोषः इति कृत्वा व्यवसिताः अपि पारयामः तातकण्वस्य दुःषन्तपरिणीताम् आपन्नसत्त्वां शकुन्तलां निवेदयितुम्। तदत्र इदानीं किं नु खल्वस्माभिः करणीयम्।)

**प्रियंवदा**–(प्रविश्य) अणुसूए, तुवर तुवर। सउन्तलाए पत्थाणकोदूहलाइं करीअन्ति। (अनुसूये, त्वरस्व त्वरस्व। शकुन्तलायाः प्रस्थानकौतूहलानि क्रियन्ते।)

**अनुसूया**–(सविस्मयम्) सहि, कधं विअ। (सखि, कथं इव।)

**प्रियंवदा**–सुणाहि। इदाणिं जेव सुहसुत्तिआपुच्छणणिमित्तं सउन्तलाए समीवं गद म्हि। (शृणु, इदानीमेव सुखसुप्तिकाप्रश्ननिमित्तं शकुन्तलायाः समीपं गतास्मि।)

**अनुसूया**–तदो तदो। (ततस्ततः।)

**प्रियंवदा**–तदो जाव णं लज्जावणदमुहिं परिस्सइअ तादकण्णो एवं अहिणन्देदि। वच्छे, दिट्ठिआ धूमोवरुद्धदिट्ठिणो वि जजमाणस्स पावअस्स मुहे ज्जेव णिवदिदा आहुदी। सुसिस्सपरिग्गहिदा विअ विज्जा असोअणीआ सि मे संवुत्ता। ता अज्ज ज्जेव तुमं इसिपरिग्गहिदं कदुअ भत्तुणो सकासं विसज्जेमि त्ति। (ततः यावदेनां लज्जावनतमुखीं परिष्वज्य तातकण्वः एवमभिनन्दति। वत्से, दिष्ट्या धूमोपरुद्धदृष्टेः अपि यजमानस्य पावकस्य मुख एव निपतिता आहुतिः। सुशिष्यपरिगृहीतेव विद्या अशोचनीया असि मे संवृत्ता। तत् अद्यैव त्वाम् ऋषिपरिगृहीतां कृत्वा भर्तुः सकाशं विसर्जयामीति।)

---

इदानीम् इतस्तस्मिन्नभिज्ञानाङ्गुरीयकं विसर्जयामि। निर्दुःखशीतले तपस्विजने को नामाभ्यर्थ्यताम्। अथवा निर्दुःखेति शङ्करः पठति। न च(ननु) सखीगामी दोष इति, व्यवसा(सि)तुमपि [न] पारयामः, तातकण्वस्य वा दुस्म[दुःष]न्तस्य राज्ञः परिणीतामापन्नसत्वां गर्भिणीं शकुन्तलां निवेदयितुम्। तदत्रेदानीं किं नु खल्वस्माभिः करणीयम्।।

त्वरय त्वरय शकुन्तलायाः प्रस्थानकौतूहलानि क्रियन्तां {क्रियन्तां वा}। सखि, कथमिव। सखि, शृण्विदानीमेव सुखसुप्तिकप्रश्न-निमित्तं शकुन्तलायाः समीपं गतास्मि। ततस्ततः। ततो यावदेनां लज्जावनतमुखीं परिष्वज्य तातकण्व एवमभिनन्दति। यावद् वाक्यालंकारे। वत्से, दिष्ट्या धूमोपरुद्धे(द्धेः) दृष्टेरपि यजमानस्य पावकमुखनिपातिता व्याहुतिः। स्वशिष्यपरिगृहीता विद्येवाशोचनीयामि (सि) मे संवृत्ता[53]। तदद्यैव त्वामृषिभिः परिगृहीतां कृत्वा, भर्तुः सकाशं विसर्जयामीति।।

---

53. विद्ययेवाशोचनीयामि मे संप्रवृत्ता इति 4117 इत्यत्र पठ्यते।

**अनुसूया**–सहि, केण उण आचक्खिदो तादकण्णस्स अअं वुत्तन्तो। (सखि, केन पुनः आख्यातः तातकण्वस्यायं वृत्तान्तः।)

**प्रियंवदा**–अग्गिसरणं पविट्ठस्स किल सरीरं विणा छन्दोवदीए वाआए। (अग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोवत्या वाचा।)

**अनुसूया**–(सविस्मयम्) कधं विअ। (कथं इव।)

**प्रियंवदा**–सुण। (शृणु।) (संस्कृतमाश्रित्य)

**दुःषन्तेनाहितं तेजो दधानां भूतये भुवः।**
**अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव।।4–6।।**

**अनुसूया**–(प्रियंवदामाश्लिष्य) सहि, पिअं मे पिअं। किं तु अज्ज ज्जेव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं दाणिं परिदोसं अणुभवामि। (सखि, प्रियं मे प्रियम्। किंतु अद्यैव शकुन्तला नीयतेति उत्कण्ठासाधारणमिदानीं परितोषमनुभवामि।)

**प्रियंवदा**–अम्हे कधं पि उक्कण्ठं विणोदइस्सामो। सा दाणिं तवस्सिणी णिव्वुदा भोदु। (आवां कथमपि उत्कण्ठां विनोदयिष्यावः। सा इदानीं तपस्विनी निवृता भवतु।)

**अनुसूया**–तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएलसमुग्गए एदंणिमित्तं जेव मए कालहरणक्खमा केसरगुण्डा णिक्खित्ता चिट्ठन्ति। ते तुमं णलिणीवत्तसंगदे करेहि जाव से अहं पि गोरोअणं तित्थमट्टिअं दुव्वाकिसलआइं च मङ्गलसमालहणत्थं विरअआमि। (तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव मया कालहरणक्षमाः केसरगुण्डाः निक्षिप्ताः तिष्ठन्ति। तान् त्वं नलिनीपत्रसङ्गतान् कुरु, यावदस्याः अहमपि गोरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि च मङ्गलसमालम्भनार्थं विरचयामि।) (प्रियंवदा तथा करोति। अनुसूया निष्क्रान्ता)

---

सखि, केन पुनराख्यातस्तातकण्वस्यायं वृत्तान्तः। अग्निशरणमग्न्यागारं प्रविष्टस्य किल तस्य च्छन्दोवत्या वाचा। आख्यात इत्यनुषङ्गः। च्छन्दोवत्या स्वच्छन्दयाकाशवाण्येत्यर्थः। कथमिव शृणु।

संस्कृतमिति०।। (4–6) अनुवादेत्यौचित्यम्। विदग्ध्यार्थ[54] प्रयोक्तव्यं संस्कृतञ्चान्तरान्तरेति नियमात्। सिद्धान्तयत्यन्यस्तनु भद्रं।। पुष्प (दुःषन्तेन)०।। (4–6) आहितमर्पितं तेजः शुक्रम्।

सखि, प्रियं मे प्रियं। किन्त्वद्यैव शकुन्तला नीयत इति इत्युत्कण्ठासाधारणं परितोषमनुभवामि। वयन्तावत् कथमप्युत्कण्ठां विनोदयिष्यामः। सा तावन्तपस्विनी निर्वृता भवतु। तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद(द्ग)के एतन्निमित्तमेव मया निक्षिप्ताः कालहरणक्षमाः केशरगुणा बकुलमालाः सन्ति, तांस्त्वं नलिनीपत्रसङ्गतान् कुरु। अहमपि यावदस्या गौरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि च मङ्गलसमालम्भनार्थं विरचयामि। समालम्भनं वर्द्धनमित्यर्थः।

---

54. वैदग्धार्थ इति 4117 इति पठ्यते।

(नेपथ्ये)

गौतमि, आदिश्यतां शार्ङ्गरव-शारद्वतमिश्राः, वत्सां शकुन्तलां नेतुं सज्जीभवतेति।

**प्रियंवदा**-(कर्णं दत्त्वा) अनुसूये, तुवर तुवर। एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दावीअन्ति। (अनुसूये, त्वरस्व त्वरस्व। एते खलु हस्तिनापुरगामिनः ऋषयः शब्दायन्ते।)

प्रविश्य समालभनहस्ता अनुसूया-सहि, एहि गच्छम्ह। (सखि, एहि गच्छावः।)

(इति परिक्रामतः)

**प्रियंवदा**-(विलोक्य) एसा सुज्जोदए ज्जेव किदमज्जणा पडिच्छिदणीवारवाअणाहिं तावसीहिं अहिणन्दीअमाणा सउन्तला चिट्ठदि। ता उवसप्पम्ह णं। (एषा सूर्योदये एव कृतमज्जना प्रतीष्टनीवारवाचनाभिः तापसीभिः अभिनन्द्यमाना शकुन्तला तिष्ठति तदुपसर्पावः।) (इति तथा कुरुतः)

(ततः प्रविशति यथानिर्दिष्टपरिवारा शकुन्तला गौतमी च)

**शकुन्तला**-भअवदीओ वन्दामि। (भगवति वन्दे।)

**गौतमी**-जाद, भत्तुणो बहुमाणसुहइत्तअं देवीसद्दं अधिगच्छ। (जात, भर्तुः बहुमानसुखयितारं देवीशब्दमधिगच्छ।)

**तापस्यः**-वच्छे, वीरप्पसविणी होहि। (वत्से, वीरप्रसविनी भव।)

(इति गौतमीवर्जं निष्क्रान्ताः)

**सख्यौ**-(उपगम्य) सहि, सुमज्जणं दे भूदं। (सखि, सुमज्जनं ते भूतम्।)

**शकुन्तला**-साअदं पिअसहीणं। इदो णिसीदध।(स्वागतं प्रियसखीभ्याम्। इतः निषीदतम्।)

**सख्यौ**-(उपविश्य) हला, उज्जुआ दाव होहि जाव दे मङ्गलसमालहणं करेमो। (सखि, ऋज्वी तावद्भव यावद् ते मङ्गलसमालभनं कुर्वः।)

---

शार्ङ्गेति। शाङ्गरव-शारद्वत[55]-प्रधाना इत्यर्थः। शार्ङ्गेति त्रयः शिष्या इति शङ्करः। त्वरय त्वरय एते खलु हस्तिनापुरगामिनो मुनयः शब्दाय्यन्ते आह्वयन्ते।

सखि, एहि गच्छावः, एषा सूर्योदय एव कृतमज्जना प्रती[ष्ट]नीवार-वाचनाभिर्वाचनं भोज्यम्। प्रहेलकं वाचनकमिति त्रिकाण्डशेषः। भोजनाभि[56]रिति शङ्करधृतः पाठो मन्दः।

तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति। तदेनामुपसर्पावः। हे भगवत्यो वन्दामि। जाते भर्तुर्बहुमानयुक्तं देवीशब्दमभिगच्छ। वीरप्रसविणी(नी) भव। सखि, सुमज्जनं ते भूतम्।

---

55. सावद्धत इति 4117 इत्यत्र पठ्यते।

56. मिथिलातः प्रकाशितायां शङ्करटीकायां-प्रतीष्टनीवारभाजनाभिः इति पाठो दृश्यते।

**शकुन्तला**–उइदं पि एदं अज्ज बहुमण्णिदव्वं। जदो दुल्लहं दाव पुणो मे सहीमण्डणं भविस्सदि। (उचितम् अपि एतद् अद्य बहुमन्तव्यम्, यतः दुर्लभं तावत् पुनः मे सखीमण्डनं भविष्यति।) (इति बाष्पं विसृजति।)

**सख्यौ**–सहि, ण जुत्तं मङ्गलआले रोदिदुं। (सखि, न युक्तं मङ्गलकाले रोदितुम्।)

(अश्रूणि परिमृज्य नाट्येन प्रसाधयतः)

**प्रियंवदा**–अहो, आहरणारिहं दे रूवं अस्समसुलहेहिं पसाहणेणिं विप्पआरीअदि। (अहो, आभरणार्हं ते रूपमाश्रमसुलभैः प्रसाधनैः विप्रकार्यते।)

प्रविश्य आभरणहस्तो **मुनिकुमारकः**–इदमलङ्कारजातम् अलङ्क्रियतामायुष्मती।

(सर्वा विलोक्य विस्मिताः)

**गौतमी**–वच्छ हारीद, कुदो एदं। (वत्स हारीत, कुतः एतत्।)

**हारीतः**–तातकण्वप्रभावात्।

**गौतमी**–किं माणसी सिद्धी। (किं मानसी सिद्धिः।)

**हारीतः**–न खलु। श्रूयताम्। तत्रभवता कण्वेन वयमाज्ञापिताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति। ततः–

**क्षौमं केन चिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं**
**निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित्।**
**अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-**
**र्दत्तान्याभरणानि नः किसलयच्छायाप्रतिस्पर्धिभिः।। 4-7।।**

**प्रियंवदा**–(शकुन्तलां विलोक्य) कोडरसंभवा वि महुअरी पोक्खरमहुं जेव अहिलसदि। (कोटरसम्भवापि मधुकरी पुष्करमध्वेवाभिलषति।)

---

स्वागतं प्रियसखीभ्यामितो निषीदतम्। सखि, ऋज्वी तावद्भव, यावत्ते मङ्गलसमालभनं कुर्व्वः। उचितम् अप्येतदद्य बहुमन्तव्यं यतो दुर्लभं तावत् पुनर्मे सखीमण्डनं भविष्यति। सखि न युक्तं मङ्गलकाले रोदितुम्। हद्धी खेदे। अहो इति शङ्करः। कष्टमिति व्याचष्टे च।

आभरणान्तेऽस्य वा रूपमाश्रमसुलभैः प्रसाधनैर्विप्रक्रियते पीड्यते। विप्रलभ्यत इति शङ्करः पठति। जातं समूहः वत्स हारीत, कुत इदम्? किं मानसीसिद्धिः?।

क्षौमं०।। (4-7) क्षौमं वाल्कलवस्त्रभेदः पट इति ख्यातः। सोमवन्मनपत्यषे[57] (?)। क्षु-धातोः क्षौमेति साधुः। स्वार्थिकेऽणि क्षौममिति। निष्कृत उद्गीर्णः प्रकाशित इत्यर्थः। चरणानुरागसदृश-श्चरणरञ्जनयोग्यः, चरणोपभोगसुलभ इति वा पाठः। लाक्षेत्यलक्तकद्रवः। आपर्वेति, पर्वभागपर्यन्तम् उद्गतैर्नोऽस्मभ्यम्। सखि, कोटर-सम्भवापि मधुकरी पुष्परसं मध्वेवाभिलषति।

---

57. सोमवन्मनद्यये इति 4118 इत्यत्र पठ्यते।

**गौतमी**–इमाए अब्भुववत्तीए सूइदा भत्तुणो गेहे अणुभविदव्वा राअलच्छी। (अनयाभ्युपपत्या सूचिता भर्तुः गेहे अनुभवितव्या राजलक्ष्मीः।)

(शकुन्तला लज्जां नाटयति)

**हारीतः**–यावदिमां वनस्पतिसेवामभिषेकार्थं मालिनीतीरमवतीर्णाय भगवते कण्वाय निवेदयामि। (इति निष्क्रान्तः)

**अनुसूया**–सहि, अणणुभूदभूसणो अअं जणो कधं तुमं अलंकरेदु। (चिन्तयित्वा विलोक्य च) चित्तपरिचएण दाणिं दे अङ्गेसुं आहरणविणिओअं करेम्ह। (सखि, अननुभूत-भूषणः अयं जनः कथं त्वामलङ्करोतु। चित्रपरिचयेन इदानीं ते अङ्गेषु आभरणविनियोगं कुर्वहे।)

**शकुन्तला**–जाणामि वो णिउणत्तणं। (जानामि वां निपुणत्वम्।)

(सख्यौ नाट्येनालङ्कारमायुञ्जाते।)

(ततः प्रविशति स्नानोत्तीर्णः कण्वः)

कण्वः–

**यास्यत्यद्य शकुन्तलेति हृदयं स्पृष्टं समुत्कण्ठया**
**अन्तर्बाष्पभरोपरोधि गदितं चिन्ताजडं दर्शनम्।**
**वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः**
**पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः।। 4-8।।**

(इति परिक्रामति)

**सख्यौ**–हला सउन्तले, अवसिदमण्डणा दाणिं सि तुमं। संपदं परिधेहि एदं विचित्तं खोमजुअलं। (सखि शकुन्तले, अवसितमण्डना इदानीमसि त्वम्। साम्प्रतं परिधेहि एतद् विचित्रं क्षौमयुगलम्।) (शकुन्तला उत्थाय नाट्येन परिधत्ते)

**गौतमी**–जाद, एसो दे आणन्दबाहपरिवाहिणा लोअणेण परिस्सअन्तो विअ गुरू उवत्थिदो। ता समुदाआरं पडिवज्जसु।

---

अनयाप्यु(भ्यु)पपत्या वृक्षानुग्रहेण सूचिता भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीः। सखि, अननुभूत भूषणोऽयं जनः, कथं त्वामलंकरोतु। चित्रकर्मपरिचयेन, चित्रे यथा द्रष्टव्यं तथेत्यर्थः। इदानीं भवाङ्गेष्वाभरणविनियोगं कुर्व्वः। चित्तेति शङ्करः पठति, मनोविकल्पमयेत्यर्थ इति व्याचष्टे च। जानामि युवयोर्निपुणत्वम्।।

यास्य०।। (4-8) अन्तर्वती यो बाष्पोऽश्रु तस्यातिशयेनापरुद्धम्। दर्शनं ज्ञानं चिन्तया कर्तुर्व्यापविच्छेदकम्। यद्वा दर्शनं नयनं चिन्तया [जडं] विषयाग्राहकम्। तावद् वाक्यालंकारे। नु प्रश्ने। सखि शकुन्तले, अवसितमण्डना निष्पन्नभूषणा इदानीं त्वमसि। साम्प्रतं परिधेहि एतद्विचित्रं क्षौमयुगलम्। जाते, एष ते आनन्दपरिवाहिना लोचनेन परिष्वजमान इव गुरुरुपस्थितः। तत् समुदाचारमभ्युत्थानादिकं प्रतिपद्यस्व।।

(जात, एषः ते आनन्दबाष्पपरिवाहिणा लोचनेन परिष्वजमानः इव गुरुः उपस्थितः। तत् समुदाचारं प्रतिपद्यस्व।) (शकुन्तला सव्रीडा वन्दनां करोति।)

**कण्वः**–वत्से,

**ययातिरेव शर्मिष्ठा पत्युर्बहुमता भव।**
**पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि।।4–9।।**

**गौतमी**–जाद, वरो क्खु एसो, ण उण आसिसा। (जात, वरः खल्वेषः, न पुनः आशीः।)

**कण्वः**–वत्से, इतः सद्यो हुताग्नीन् प्रदक्षिणीकुरुष्व। (सर्वे परिक्रामन्ति)

**कण्वः**–वत्से,

**अमी वेदीं परितः क्लृप्तधिष्ण्याः**
**समिद्वन्तः प्रान्तविस्तीर्णदर्भाः।**
**अपघ्नन्तो दुरितं हव्यगन्धै-**
**र्वैतानास्त्वां वह्नयः पालयन्तु।।4–10।।**

(शकुन्तला प्रदक्षिणं करोति)

**कण्वः**–वत्से, प्रतिष्ठस्वेदानीम्। (सदृष्टिविक्षेपम्) क्व नु ते शार्ङ्गरव–शारद्वतमिश्राः।

**शिष्यौ**–(प्रविश्य) भगवन् इमौ स्वः।

**कण्वः**–वत्स शार्ङ्गरव, भगिन्याः पन्थानमादेशय।

**शिष्यः**–इत इतो भवती। (सर्वे परिक्रामन्ति)

**कण्वः**–भो भोः सन्निहितवनदेवतास्तपोवनतरवः।

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या**
**नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।**

---

ययातेः०।। (4–9) येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राडित्यमरः। आशीरलङ्कारः। हे जात, वरः खल्वेष, नाशीः। सन्तुष्टदेवादीनामवश्यंभाविवचनं वरः। आशीस्तु कदाचित् फलदायिनी वाक्।

अमी०।। (4–10) वेदीं परितः वेद्याः समीपे षष्ठ्यर्थे द्वितीया। धिष्ण्यं स्थानं, हव्यं हवनीयं, वैताना यज्ञसम्बन्धिनः। वितानो यज्ञ उल्लोच इति मेदिनी। भगवन्निति।

देवाश्च मुनयश्चैव लिङ्गिनः साधकाश्च ये।
भगवन्निति ते वाच्याः सर्व्वैः स्त्रीपुंनपुंसकैः।। इति भरतः[58]।

---

58. नाट्यशास्त्रम् (21–4), सं. बलदेव उपाध्याय, चौखम्बा प्रकाशन, वाराणसी, वि.सं. 2037 इत्यत्र किंचिद्भिन्नं पठ्यते।

**आद्ये वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः**
**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्।। 4–11।।**

**शार्ङ्गरवः**–(कोकिलशब्दं सूचयित्वा) भगवन्,

**अनुमतगमना शकुन्तला सा तरुभिरियं वनवासबन्धुभिः।**
**परभृतविरुतं कलं यदासीत्प्रतिवचनीकृतमेभिरात्मनः।। 4–12।।**

(नेपथ्ये)

**रम्यान्तरः कमलिनीहरितैः सरोभि-**
**श्छायाद्रुमैर्नियमितार्कमरीचितापः ।**
**भूयात् कुशेशयरजोमृदुरेणुरस्याः**
**शान्तानुकूलपवनश्च शिवश्च पन्थाः।। 4–13।।**

(सर्वे सविस्मयमाकर्णयन्ति)

**गौतमी**–जाद, णादिकुलसिणिद्धं अब्भणुण्णादा सि तवोवणदेवदाहिं। ता पणम भअवदीणं। (जात, ज्ञातिकुलस्निग्धमभ्यनुज्ञातासि तपोवनदेवताभिः। तत्प्रणम भगवतीभ्यः।)

**शकुन्तला**–(सप्रणामं परिक्रम्य, जनान्तिकम्) पिअंवदे, अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण चलणा मे पुरोमुहा णिवडन्ति। (प्रियंवदे, आर्यपुत्र-दर्शनोत्सुकायाः अपि आश्रमपदं परित्यजन्त्याः दुःखदुःखेन चरणौ मे पुरोमुखौ निपततः।)

**प्रियंवदा**–ण केवलं तुमं जेव तवोवणविरहकादरा। तए उवत्थिदविओअस्स तवोवणस्स वि अवत्थं पेक्ख दाव। (न केवलं त्वमेव तपोवनविरहकातरा। त्वया उपस्थित-वियोगस्य तपोवनस्याप्यवस्थां प्रेक्षस्व तावत्।)

---

पातुं०।। (4-11) पल्लवं किसलयं, कोकिलं पिकध्वनिम्।

अनु०।। (4-12) इयं शकुन्तला तरुभिः स्वीकृतप्रस्तावा यद्यत इदानीं यात्रायां कोकिलध्वनिः शुभाय।।

रम्या०।। (4-13) रम्येति पद्मिनी हरिद्वर्णैः[58] सरोभिर्मनोज्ञमध्यच्छायाद्रुमैश्छायया लक्षितैर्द्रुमैः, शाकपार्थिवादिः, वृक्षभेदैर्वा। पूर्वाह्णे चापराह्णे च तलं यस्य न मुञ्चति। अमन्द-शीतलाच्छाया, स च्छायातरुरुच्यते।। इति। नियमितमपनीतं कुशेशयं पद्मं शान्तः पाटच्चरादिशून्यः शिवः सुखदः। जात, नातिकुलस्निग्धं यथा स्यान्नाभिर्ज्ञातिः, प्रत्यनुज्ञातासि तपोवनदेवताभिस्तत् प्रणम भगवतीभ्यः। प्राकृते चतुर्थ्यां षष्ठी। जनान्तिक-लक्षणमुक्तमेव।। प्रियम्वदे, आर्यपुत्र-दर्शनोत्सुकाया अपि तपोवनं परित्यजन्त्या दुःखदुःखेन मम चरणौ पुरोमुखौ निपतत इति च पाठः। न केवलं त्वमेव तपोवनविरहकातरा, त्वया उपस्थितवियोगस्य तपोवनस्याप्यवस्थां प्रेक्षस्व तावत्।

---

59. हरिद्वन्तैः इति 4118 इत्यत्र पठ्यते।

**उल्ललइ दब्भकवलं मई परिच्चत्तणच्चणा मोरी।**
**ओसरिअपण्डुवत्ता मुअन्ति अङ्गाइ व लआओ।। 4–14।।**
**( उद्गलति दर्भकवलं मृगी, परित्यक्तनर्तना मयूरी।**
**अपसृतपाण्डुपत्राः मुञ्चन्त्यङ्गानि इव लताः )।। 4–14।।**

**शकुन्तला**–(स्मृत्वा) ताद, लदावहिणिअं दाव माहविं आमन्तइस्सं। (तात, लताभगिनीं तावत् माधवीमामन्त्रयिष्यामि।)

**कण्वः**–वत्से, अवैमि ते तस्यां सौहार्दम्। इयं सा दक्षिणे। पश्य।

**शकुन्तला**–(उपेत्य लतामालिङ्ग्य) लदावहिणिए। पच्चालिङ्ग मं साहामईहिं बाहाहिं। अज्ज पहुदि दूरवत्तिणी खु दे भविस्सं। ताद, अहं विअ इअं तए चिन्तणीआ। (लताभगिनि, प्रत्यालिङ्ग मां शाखामयैः बाहुभिः। अद्यप्रभृति दूरवर्तिनी खलु ते भविष्यामि। तात, अहमिव इयं त्वया चिन्तनीया।)

**कण्वः**–वत्से,

**सङ्कल्पितं प्रथममेव मया त्वदर्थे**
**भर्तारमात्मसदृशं स्वगुणैर्गतासि।**
**अस्यास्तु सम्प्रति वरं त्वयि वीतचिन्तः**
**कान्तं समीपसहकारमिमं करिष्ये।। 4-15।।**

तदितः पन्थानं प्रतिपद्यस्व।

**शकुन्तला**–(सख्यावुपेत्य) हला, एसा दोण्णं पि वो हत्थे णिक्खेवो। (सखि, एषा द्वयोः अपि वां हस्ते निक्षेपः।)

**सख्यौ**–अअं जणो कस्सिं दाणिं समप्पिदो। (अयं जनः कस्मिन्निदानीं समर्पितः।)

(इति बाष्पं विसृजतः)

---

उल्ल०।। (4-14) उल्ललति(उद्गलति) दर्भकवलं मृगीनां, परित्यक्तनृत्या मयूराः। अपसृतपाण्डुपत्रा मुञ्चन्ति अङ्गानीव लताः। शङ्करस्तु उद्गीर्ण दर्भकवला मृगी, परित्यक्तनर्तना मयूरा इति पूर्वार्द्धं पठति।।

तात, लताभगिनीं तावन्माधवीमामन्त्रयिष्ये। लताभगिनी(नि), प्रत्यालिङ्ग मां शाखामयैर्बाहुभिरद्य प्रभृति दूरवर्तिनी खलु ते भविष्यामि। तात[60], अहम् इवेयं त्वया चिन्तनीया।।

सङ्क०।। (4-15) सङ्कल्पितं चिन्तितं कान्तं कमनीयं निकटस्थसहकारं अस्या वरं जामातारं करिष्ये। वरो जामातरि श्रेष्ठ इति शाश्वतः। सखि, एषा द्वयोरपि युवयोर्हस्ते निक्षेपः। अयमस्मद्रूपो जनः कस्मिन् समर्थि(र्पि)तः। तात[61], एषा उटजपर्यन्तचारिणी गर्भभारमन्थरा मृगवधूर्यदा सुखप्रसवा

---

60. लिपिकारद्वयेनात्र ताताहमिव इति सन्धिकृतः पाठः प्रदत्तः।

61. लिपिकारद्वयेनात्र तातैषा इति सन्धिकृतः पाठः प्रदत्तः।

**कण्वः**–अनुसूये प्रियंवदे, अलं रुदितेन। ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्तव्या।

(सर्वे परिक्रामन्ति)

**शकुन्तला**–ताद, एसा उडअपज्जन्तआरिणी गब्भहारमन्थरा मिअवहू जदा सुहप्पसवा भवे तदा मे कं पि पिअणिवेअणइत्तअं विसज्जइस्सध। मा एदं विसुमरिस्सध। (तात, एषा उटजपर्यन्तचारिणी गर्भभारमन्थरा मृगवधूः यदा सुखप्रसवा भवेत् तदा मे किमपि प्रियनिवेदयितारं विसर्जयिष्यथ। मा एतद् विस्मरिष्यथ।)

**कण्वः**–वत्से, नेदं विस्मरिष्यामि।

**शकुन्तला**–(गतिभेदं रूपयित्वा) अम्भो, को णु क्खु एसो पदक्कन्तो विअ मे पुणो पुणो वसणन्ते सज्जदि। (अम्भो, कोऽनु खल्वेषः पदाक्रान्तः इव मे पुनः पुनः वसनान्ते सज्जति।

(परिवृत्यावलोकयति)

**कण्वः**–

**यस्य त्वया व्रणविरोहणमिङ्गुदीनां**
**तैलं न्यषिच्यत मुखे कुशसूचिविद्धे।**
**श्यामाकमुष्टिपरिवर्धितको जहाति**
**सोऽयं न पुत्रकृतकः पदवीं मृगस्ते।। 4–16।।**

**शकुन्तला**–वच्छ, किं मं सहवासपरिच्चाइणिं अणुबन्धसि। णं अचिरप्पमृदोवरदाए जणणीए विणा जधा मए वड्डिदो सि तधा इदाणिं पि मए विरहिदं तादो तुमं चिन्तइस्सदि। ता णिअत्तसु, वच्छ णिअत्तसु।

(वत्स, किं मां सहवासपरित्यागिनीमनुबध्नासि। ननु अचिरप्रसूतोपरतया जनन्या विना यथा मया वर्धितोऽसि तथा इदानीमपि मया विरहितं तातः त्वां चिन्तयिष्यति। तत् निवर्तस्व, वत्स निवर्तस्व।)

(इति रुदती प्रस्थिता)

---

भवति, तदा (त्म)त्वम् कमपि प्रियनिवेदकं विसर्जयिष्यथ। मा एतद्विस्मरिष्यथ। गतीति अवरुद्ध{गमं}गमनमभिनीय। अम्मो विस्मये कष्टे वा। को नु खल्वेष पदाक्रान्त इव पुनः पुनर्मे वसनान्ते सज्जति वसनान्तं गृह्णाति वा।

यस्य०।। (4–16) व्रणविरोहणं क्षतप्ररोहकं परिवर्द्धितकोऽतिशयेन पोषितः पुत्रकृतकः कृत्रिमपुत्रः। वत्स, किं मां सहवासपरित्यागिनीम् अनुबध्नासि। ननु चिरप्रसृतोपरतया प्रसवाव्यवहितकालमृतया जनन्या विना यथा मया वर्द्धितोऽसि, तथेदानीमपि मया विरहितं तातस्त्वमनुचिन्तयिष्यति, तन्निवर्तस्व[62]।।

62. तन्निवर्तस्व वत्स, निवर्तस्व इत्यधिकं 4118 इत्यत्र पठ्यते।

**कण्वः**–वत्से, अलं रुदितेन। स्थिरा भव। इतः पन्थानमवलोकय।

**उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं**
**बाष्पं कुरु स्थिरतया शिथिलानुबन्धम्।**
**अस्मिन्नलक्षितनतोन्नतभूमिभागे**
**मार्गे पदानि खलु ते विषमीभवन्ति।। 4–17।।**

**शारङ्गरव**–भगवन्, उदकान्तं स्निग्धोऽनुगम्यत इति स्मर्यताम्। तदिदं सरसीतीरम्। अत्र नः सन्दिश्य प्रतिगन्तुमर्हसि।

**कण्वः**–तेन हीमां क्षीरवृक्षच्छायामाश्रयामः। (सर्वे तथा नाटयन्ति)

**कण्वः**–किं नु खलु तत्रभवतो दुःषन्तस्य युक्तरूपं सन्देष्टुम्। (इति चिन्तयति।)

**अनुसूया**–सहि, ण णो अस्समपदे अत्थि को वि चित्तवन्तो जो तए विरहीअन्तो अज्ज ण ऊसुओ किदो। पेक्ख–

**पुडइणिवत्तन्तरिअं वाहरिओ णाणुवाहरेइ पिअं।**
**मुहउव्वुढमुणालो तइ दिट्ठिं देइ चक्काओ।। 4–18।।**

(सखि, न नः आश्रमपदे अस्ति कोऽपि चित्तवान् यः त्वया विरह्यमाणः अद्य न उत्सुकः कृतः। प्रेक्षस्व–

**( पुटकिनीपत्रान्तरितां व्याहृतः नानुव्याहरति प्रियाम्।**
**मुखोद्व्यूढमृणालः त्वयि दृष्टिं ददाति चक्रवाकः )।। 4–18।।**

**कण्वः**–वत्स शार्ङ्गरव, इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्याभिधातव्यः।

**अस्मान्साधु विचिन्त्य संयमधनान् उच्चैः कुलं चात्मन-**
**स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।**

---

उत्पन्न०।। (4–17) उपरुद्धेति प्रतिरुद्धव्यापारं स्थिरतया धैर्येण खलु यस्माद्विषमीभवन्ति, स्खलितानि स्युः। उदकान्तमिति यदाह आ उदकात् प्रियं पान्थमनुव्रजेदिति। प्रतिगन्तुं निवृत्य गन्तुम्। सखि, नास्माकम् आश्रमपदेऽस्ति कोऽपि चित्तवान् यस्त्वया विरहय्यमनो न उत्सुको भवति। न ताम्यतीति च पाठः। प्रेक्षस्व प्रेक्षस्व।। पुट0।। (4–18) "पुटकिनीपत्रान्तरितां व्याकृतां नानुव्याहरति प्रियां। प्रियोद्दृढमृणालस्त्वयि दृष्टिं ददाति चक्रवाकः।।" पुटकिनी पद्मिनी। मृणालिनी पुटकिनीति हारावली। तयोद्व्यूढेति। तथा पूर्वप्रणयानुरूपप्रकारेणेति शङ्करः। अ{ल्प}व्याहारे हेतुस्त्वयीति। चक्का तु चक्रवाके स्यादिति देशी।।

अस्मा०।। (4–19) साधु यथा स्यात् संयमेति राज्ञस्त्रासजननाय। अन्ये तु अन्यद्धनादिकमस्माकं नास्तीति जामातुरम्बरदूरीकरणायेत्याहुः। उच्चैः कुलेति कुलीनस्य हि निजवधूषु विप्रियव्यवहारोऽधर्म्महेतुरिति भावः।

**सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया**
**दैवाधीनमतः परं न खलु तत्स्त्रीबन्धुभिर्याच्यते।।4–19।।**

**शिष्यः**–भगवन् गृहीतोऽयं सन्देशः।

**कण्वः**–(शकुन्तलां विलोक्य) वत्से त्वमिदानीमनुशासनीया। वनौकसोऽपि वयं लोकज्ञा एव।

**शिष्यः**–भगवन्, न खलु कश्चिद् अविषयो नाम धीमताम्।

**कण्वः**–वत्से, सा त्वमितः पतिगृहं प्राप्य,–

**शुश्रूषस्व गुरुन्कुरु प्रियसखीवृत्तं सपत्नीजने**
**भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।**
**भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी**
**यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः।।4–20।।**

कथं वा गौतमी मन्यते।

**गौतमी**–एत्तिकं खु बहूणं उवदेसो। (शकुन्तलां प्रति) जाद, मा विसुमरिस्ससि। (एतावत्खलु वधूनामुपदेशः। जाते, मा विस्मरिष्यसि।)

**कण्वः**–एहि वत्से, परिष्वजस्व मां सखीजनं च।

**शकुन्तला**–ताद, इदो ज्जेव पिअसहीओ विणिअत्तिसन्ति। (तात, इतः एव प्रियसख्यौ विनिवर्तिष्येते।)

**कण्वः**–वत्से, इमे अपि प्रदेये। तन्न युक्तमनयोस्तत्र गन्तुम्। त्वया सह गौतमी गमिष्यति।

**शकुन्तला**–(पितुरङ्कमाश्लिष्य) कधं दाणिं तादस्स अङ्गदो परिब्भट्ठा मलअपव्वदुम्मूलिदा विअ चन्दणलदा देसन्तरे जीविदं धारइस्सं। (कथमिदानीं तातस्य अङ्कात् परिभ्रष्टा मलयपर्वतोन्मूलितेव चन्दनलता देशान्तरे जीवितं धारयिष्यामि।)

(इति रोदिति)

---

कथमपि दुर्ग्रहेणेत्यर्थः। स्नेहप्रवृत्तिं प्रेमचेष्टां, भावप्रवृत्तिमिति शङ्करः। सामान्येति साधारण गौरवपुरःसरं प्रतिपत्तिः। पदप्राप्तौ प्रवृत्तौ गौरवे चेति विश्वः। दैवं प्राक्तनकर्म्म। अनुशासनीया उपदेश्या।।

शुश्रू०।। (4–20) गुरून् श्वशुरादीन् शुश्रूषस्वाराधय। चरित्रं च्छन्दसो वृत्तमिति शाश्वतः। विप्रकृतापि पीडितापि रोषणतया भर्तुः प्रतीपं प्रातिकूल्यं मा गमः। प्रतीपं कोऽपि नीत्वमिति कश्चित्। भूयिष्ठमतिशयेन सस्नेहा भव। सुखेषु नात्युत्सुका च। पदं व्यवसायं प्रतिष्ठां वा। पदं स्थाने प्रतिष्ठायामिति कोषः। वामा। एतद्विरुद्धा आधिर्मानसी व्यथा, दक्षिणश्चातिस्नेह इति विश्वः। उपदिष्टनाट्यलक्षणमिदम्। तदुक्तम्–उपदिष्टं मनोहारिवाक्यं शास्त्रानुसारतः। एतावानेव वधूजनानामुपदेशः, जात! मा विस्मरिष्यसि। तात, इत एव प्रियसख्यौ निवर्तयिष्येते। प्रदेये प्रतिपाद्ये। कथं तातस्याङ्कात् परिभ्रष्टा मलयपर्वतोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि।।

**कण्वः**–वत्से, किमेव कातरासि।

**अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे**
**विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला।**
**तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं**
**मम विरहजां न त्वं वत्से शुचं गणयिष्यसि।। 4-21।।**

**शकुन्तला**–(पादयोः पतित्वा) ताद, वन्दामि। (तात, वन्दे।)

**कण्वः**–वत्से, यदहमीहे तदस्तु ते।

**शकुन्तला**–(सख्यावुपेत्य) सहीओ, एध दुवे वि मं समं जेव परिस्सअध। (सख्यौ, एते द्वे अपि मां सममेव परिष्वजेथाम्।)

**सख्यौ**–(तथा कृत्वा) सहि, जइ कदा वि सो राएसी पच्चहिण्णाणमन्थरो भवे तदो से अत्तणो णामधेअङ्किदं अङ्गुलीअअं दंसइस्ससि। (सखि, यदि कदा अपि सः राजर्षिः प्रत्यभिज्ञानमन्थरः भवेत् ततः अस्मै आत्मनः नामधेयाङ्कितम् अङ्गुरीयकं दर्शयिष्यसि।

**शकुन्तला**–इमिणा सन्देहेण वो कम्पिदं मे हिअअं। (अनेन सन्देहेन वां कम्पितं मे हृदयम्।)

**सख्यौ**–सहि, मा भाआहि। सिणेहो पावं आसङ्कदि। (सखि, मा बिभीहि। स्नेहः पापम् आशङ्कते।)

**शारङ्गरवः**–(विलोक्य) भगवन्, युगान्तरमधिरूढः सविता। तत्त्वरतां भवती।

**शकुन्तला**–(भूयः पितुरङ्कमाश्लिष्य) ताद, कदा णु क्खु भूओ तवोवणं पेक्खिस्सं। (तात, कदा नु खलु भूयः तपोवनं प्रेक्षिष्ये।)

**कण्वः**–वत्से,

**भूत्वा चिराय सदिगन्तमहीसपत्नी**
**दौःषन्तिमप्रतिरथं तनयं प्रसूय।**

---

अभि०।। (4-21) अभिजनवतः [कु]लीनस्य। कूलेस्य(त्य)भिजन इत्यमरः। तात वन्दे। सख्यौ एतमागच्छतम्। द्वे अपि युवां सममेकदैव मां परिष्वजेथाः। सखि, यदि कदाचित् स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत् तदास्मै आत्मनो नामाङ्कितमङ्गुरीयकं दर्शयिष्यसि। अमुना सन्देहेन युवयोः कम्पितं मे हृदयम्। सखि, मा भैषीः। स्नेहः पापम् आशङ्कते। युगान्तरेति। युगं प्रहर इति केचित्। हस्तचतुष्ट्यं युगमित्यन्यः। युगं कृतादिषु, युग्मे हस्तचतुष्ट्ये स्यादिति मेदिनी। तात, कदा नु खलु तपोवनं प्रेक्षिष्ये।

भूत्वा०।। (4-22) चिरकालं व्याप्य सदिगन्ताया मह्याः सपत्नी भूत्वा स्वान्तं दुःष्वन्तस्यापत्यम्। अप्रतिरथो नास्ति प्रतिरथः, परिपन्थी योधो यस्य, तत् सन्निवेशितेति तस्मिन् पुत्रे निवेशिता धूर्भारो येन। शान्त्यै मोक्षार्थं पदमवस्थानम्।।

**तत्सन्निवेशितधुरेण सहैव भर्त्रा**
**शान्त्यै करिष्यसि पदं पुनराश्रमेऽस्मिन्।। 4–22।।**

**गौतमी**–जाद, परिहीअदि दे गमणवेला। ता णिअत्तावेहि पिदरं, अधवा चिरेण वि एसा ण णिअत्तइस्सदि। ता णिअत्तदु भवं। (जात, परिहीयते ते गमनवेला। तत् निवर्तय पितरं। अथवा चिरेणापि एषा न निवर्तयिष्यति। तत् निवर्ततां भवान्।)

**कण्वः**–वत्से, उपरुध्यते मे तपोवनानुष्ठानम्।

**शकुन्तला**–तवोवणवावारेण णिरुक्कण्ठो तादो। अहं उण उक्कण्ठाभाइणी संवुत्ता। (तपोवनव्यापारेण निरुत्कण्ठः तातः। अहं पुनः उत्कण्ठाभागिनी संवृत्ता।)

**कण्वः**–अयि, किं मामेवं जडीकरोषि। (निःश्वस्य)

**अपयास्यति मे शोकः कथं नु वत्से त्वयावचितपूर्वम्।**
**उटजद्वारि विरुढं नीवारबलिं विलोकयतः।। 4–23।।**

गच्छ। शिवास्ते सन्तु पन्थानः।

(इति निष्क्रान्ताः शकुन्तलया सह गौतमी-शारङ्गरव-शारद्वतमिश्राः।)

**सख्यौ**–(चिरं विलोक्य सकरुणम्) हद्धी हद्धी, अन्तरिदा सउन्तला वणराईहिं। (हा धिक्, हा धिक्। अन्तरिता शकुन्तला नवराजिभिः।)

**कण्वः**–अनुसूये प्रियंवदे, गता वां सहचरी। निगृह्य शोकावेषं मामनुगच्छतम्।

(सर्वे प्रस्थिताः)

**उभे**–ताद, सउन्तलाविरहिदं सुण्णं विअ तवोवणं पविसामो। (तात, शकुन्तलाविरहितं शून्यमिव तपोवनं, प्रविशावः।)

**कण्वः**–स्नेहवृत्तिरेवंदर्शिनी।

(सविमर्शं परिक्रम्य)

हन्त भोः। शकुन्तलां विसृज्य लब्धमिदानीं स्वास्थ्यम्। कुतः–

---

जात, परिहीयते ते गमनवेला, तन्निवर्तय पितरम्। अथवा चिरेणापि नैषा निवर्तयिष्यति, अर्थात्त्वं तन्निवर्ततां भवान्। तपोवनव्यापारेण निरुत्कण्ठस्तातो भविष्यति। अहं पुनरुत्कण्ठा-भागिनी संवृत्ता।

अप0।। (4-23) शोकोऽर्थात्त्वद्विरहजः। नु प्रश्ने। बलिमुपहारम्। बलिः पूजोपहारयोरिति कोषः। हा धिक् अन्तरिता शकुन्तला वनराजिभिः। तात शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशामः। विसृज्य प्रस्थाप्य।

**अर्थो हि कन्या परकीय एव**
**तामेव संप्रेष्य परिग्रहीतुः।**
**जातोऽस्मि सद्यो विशदान्तरात्मा**
**चिरस्य निक्षेपमिवार्पयित्वा।। 4–24।।**

(इति निष्क्रान्ताः सर्वे)

।। इति चतुर्थोऽङ्कः।।

---

अर्थः० ।। (4–24) कन्यारूपोऽर्थः संप्रेष्य प्रस्थाप्य परिगृहीतुः परिणेतुः कृते। विशदो ह्यन्तरात्मा प्रसन्नमयः। चिरस्य चिरकालं धृतं, यद्वा चिरात्।।

**।। इति चतुर्थोऽङ्कः।।**

—•—

## ।। पञ्चमोऽङ्कः ।।

(ततः प्रविशति कञ्चुकी)

कञ्चुकी–(निःश्वस्य) अहो बत कीदृशीं वयोऽवस्थामापन्नोऽस्मि।

**आचार इत्यधिकृतेन मया गृहीता**
**या वेत्रयष्टिरवरोधगृहेषु राज्ञः।**
**काले गते बहुतिथे मम सैव जाता**
**प्रस्थानविक्लवगतेरवलम्बनाय ।।5–1।।**

यावदभ्यन्तरगताय देवाय स्वमनुष्ठेयमकालक्षेपार्हं निवेदयामि। (स्तोकमन्तरं गत्वा) किं पुनस्तत्। (विचिन्त्य) आम् ज्ञातम् कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति। भोश्चित्रमेतत्।

**क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः।**
**निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः।।5–2।।**

(परिक्रम्य दृष्ट्वा) एष देवः

**प्रजाः प्रजाः स्वा इव तन्त्रयित्वा**
**निषेवते शान्तमना विविक्तम्।**
**यूथानि सञ्चार्य रविप्रतप्तः**
**शीतं दिवा स्थानमिव द्विपेन्द्रः।।5–3।।**

---

कञ्चुकी। अन्तःपुरचारी वृद्धद्विजः। यदाह–अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते।। जरा वैक्लव्यमुखेन(युक्तेन)[63] विशेद्गात्रेण कञ्चुकी।। इति भरतः। यो न त्वरावह स्त्रीणामिति तृतीय–चरणमन्ये पठन्ति। आचा०।। (5–1) आचारः अधिकारः मर्यादेत्यन्ये अवरोधेत्यन्तःपुरगृहेषु। अवरोधः स्त्री वा। बहुतिथे बहुकाले, "बहु पूग[ग]णे०" (पा.सू. 5–2–52) त्यादिना तिथुक्। प्रस्थानं प्रस्थानोद्यम इति शङ्करः। सञ्चार इत्यन्यः। क्षणात्०।। (5–2) प्रबोधमायात्यर्थम् निश्चिनोति, पक्षे छन्ना[64] भवति। तमसाऽन्धकारेण[65] च निर्वास्यतो निर्वाणं गच्छतः।

प्रजा०।।(5–3) प्रजा स्यात् सन्ततौ जने इत्यमरः। तन्त्रयित्वा पालयित्वा, विविक्तं विजनदेशम्। शीतं शीतलम्। दिवा दिवसे। उपमा।

यत् सत्यं सत्यमेव। अथवाऽऽक्षेपे। भानुः०।। (5–4) देव(एक)वारम्। रात्रिन्दिवमिति। अचतुरादि–निपातनात् शेषोऽन्तः सदैव सततमेव षष्ठ्यांशवृत्ते राज्ञः धर्म्मः समुचितव्यापारः।

---

63. प्रकाशितमैथिलपुस्तके वैक्लव्ययुक्तेन इति पठ्यते।
64. दीप्ता इति 4117 इत्यत्र पठ्यते।
65. तमसाञ्जनेनान्धकारेण चेति 4118 इत्यत्र पठ्यते।

यत्सत्यं शङ्कित इवास्मीदानीमेव धर्मासनादुत्थिताय देवाय कण्वशिष्यागमनं निवेदयितुम्। अथवा कुतो वा विश्रामो लोकपालानाम्। तथा हि–

**भानुः सकृद्युक्ततुरङ्ग एव**
**रात्रिंदिवं गन्धवहः प्रयाति।**
**शेषः सदैवाहितभूमिभारः**
**षष्ठांशवृत्तेरपि धर्म एषः।। 5–4।।**

(इति परिक्रामति)

(ततः प्रविशति राजा विदूषको विभवतश्च परिवारः।)

**राजा**–(अधिकारखेदं निरूप्य) सर्वः प्रार्थितमधिगम्य सुखी सम्पद्यते, राज्ञां तु चरितार्थतापि दुःखोत्तरैव। कुतः–

**औत्सुक्यमात्रमवसादयति प्रतिष्ठा**
**क्लिश्नाति लब्धपरिपालनवृत्तिरेव।**
**नातिश्रमापनयनाय यथा श्रमाय**
**राज्यं स्वहस्तधृतदण्डमिवातपत्रम्।। 5–5।।**

(नेपथ्ये)

**वैतालिकौ**–जयति जयति देवः।

**एकः**–

**स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः, प्रतिदिनमथ वा ते सृष्टिरेवंविधैव।**
**अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं, शमयति परितापं छायया संश्रितानाम्।। 5–6।।**

---

दर्पणकारेण तु नवीकृते[ति] पाठान्तरेण पद्यमिदमुदाहृतम्। यथा भानुः सदा युक्ततुरङ्ग एव रात्रिन्दिवेति तुल्यम्। बिभर्ति।। शेषः सततं धरित्रीमित्यन्यतुल्यम्। विभवतो वैभवानुरूपं, परिवारः परिजनः। प्रत्येकं चामरादिवाहिनां कथने गौरवं स्यादिति तत् समाधानमिदम्। चरितार्थता कृतार्थता। दुःखोत्तरा दुःखप्रधाना।

औत्सुक्य०।।(5-5) औत्सुक्यम् उत्कण्ठा, कदा राजा भविष्यामीत्यादि, तामेव दुःखदायिनीं प्रतिष्ठाम् अवसादयति। लब्धपालनवृत्तिस्तु पीडयत्येव अर्थान्नृपम्। एव-शब्दो भिन्नक्रमे। एवमित्यनुभूयमान-प्रकारेणेति शङ्कर-दुर्बोधः। राज्यं कर्तृ उत्कण्ठामात्रं नाशयति प्रतिष्ठां प्रागवस्थितां ख्यातिं क्लिश्नातीत्यन्ये। राज्यमुत्कण्ठामात्रं ख्यातिं नाशयतीति तु शङ्करस्य तु कुव्याख्यानम्।। वैतालिका लक्षणया बन्दिनः।।

जाने तत्रभवती हंसवती दुःस्व(ष)न्तभार्या, वर्णपरिचयं करोति। गीतिषु चत्वारो वर्णा भवन्ति। यदाह भरतः–

स्थायी तथैव सञ्चारी, तथारोहावरोहिणौ। वर्णाश्चत्वार एवैते कथिताः सर्वगीतिषु।।
तेषां परिचयमभ्यासं वर्णनिश्चयम्। सुरजातिनिश्चयमित्यन्यः पठति।।

**द्वितीयः–**

**नियमयसि विमार्गप्रस्थितानात्तदण्डः**
**प्रशमयसि विवादं कल्पसे रक्षणाय।**
**अतनुषु विभवेषु ज्ञातयः सन्तु नाम**
**त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम्।। 7।।**

**राजा**–(आकर्ण्य) आश्चर्यम्। एतेन कार्यानुशासनपरिश्रान्ताः पुनर्नवीकृताः स्मः।

**विदूषकः**–भो, गोविन्दारओ त्ति भणिदस्स रिसभस्स परिस्समो णस्सदि। (भोः, गोवृन्दारकः इति भणितस्य ऋषभस्य परिश्रमः नश्यति।)

**राजा**–(सस्मितम्) ननु क्रियतामासनपरिग्रहः।

(उभावुपविष्टौ परिजनश्च यथास्थानं स्थितः।)

(नेपथ्ये वीणाशब्दः)

**विदूषकः**–(कर्णं दत्त्वा) भो वअस्स, संगीदसालन्तरे कण्णं देहि। लअसुद्धाए वीणाए सरसंजोओ सुणीअदि। जाणे तत्थभोदी हंसवदी वण्णपरिचअं करेदि त्ति। (भोः वयस्य, सङ्गीतशालान्तरे कर्णं देहि। लयशुद्धायाः वीणायाः स्वरसंयोगः श्रूयते। जाने तत्रभवती हंसवती वर्णपरिचयं करोतीति।)

**राजा**–तूष्णीं भव यावदाकर्णयामि।

**कञ्चुकी**–(विलोक्य) अये, अन्यासक्तचित्तो देवः। तदवसरं प्रतिपालयामि।

(इत्येकान्ते स्थितः)

(नेपथ्ये गीयते।)

**अहिणवमहुलोहभाविओ तह परिचुम्बिअ चूअमञ्जरिं।**
**कमलवसइमेत्तणिव्वुओ महुअर वीसरिओ सि णं कइं।। 5–8।।**
**(अभिनवमधुलोभभावितः तथा परिचुम्ब्य चूतमञ्जरीम्।**
**कमलवसतिमात्रनिर्वृतः मधुकर विस्मृतः असि एनां कथम्)।। 5–8।।**

**राजा**–अहो रागपरिवाहिणी गीतिः।

---

अहि०।। (5-8) अभिनवमधुलोभभावितः तथा परिचुम्ब्य चूतमञ्जरि(री)म्। कमलवसतिमात्र-निर्वृतो मधुकर विस्मृतोऽस्येनां कथम्।। भावितामिति शङ्करः। विस्मृत इति कर्तरि क्तः। शकुन्तलोक्तिरियम्। गौतमी पठिता गीतिरियमित्यन्यः। प्रच्छेदकाख्यं[66] लास्याङ्गमिदम्। तदुक्तम्[67]–"अन्यासक्तम् पतिं मत्वा, प्रेमविच्छेदमन्युना। वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः"।। इति। रागोऽनुरागः, स्वर इत्यन्यः।

66. मातृका 4117 इत्यत्र कार्यम् इति पठ्यते।

67. कविकण्ठहारे इति शङ्करः (पृ. 254)।

**विदूषकः**–भो वअस्स। किं दाव से गीदिआए गहिदो भवदा अक्खरत्थो। (भोः वयस्य, किं तावदस्याः गीतिकायाः गृहीतः भवताक्षरार्थः।)

**राजा**–(सस्मितम्) सकृत्कृतप्रणयोऽयं जनः। तदहं देवीं हंसवतीमन्तरेणोपालम्भम् आगतोऽस्मि। सखे माधव्य, मद्वचनादुच्यतां देवी हंसवती सम्यगुपालब्धोऽस्मीति।

**विदूषकः**–जं भवं आणवेदि। (उत्थाय) भो वअस्स। गहिदो तए परकेरएहिं हत्थेहिं सिहण्डए अच्छभल्लो। ता अवीदराअस्स विअ समणस्स णत्थि दाणिं मे मोक्खो। (यद्भवान् आज्ञापयति। भोः वयस्य, गृहीतः तया परकीयैः हस्तैः शिखण्डके अच्छभल्लः। तत् अवीतरागस्येव श्रमणस्य नास्ति इदानीं मे मोक्षः।)

**राजा**–गच्छ, नागरकवृत्त्या शान्तयैनाम्।

**विदूषकः**–का गदी। (का गतिः) (इति निष्क्रान्तः)

**राजा**–(स्वगतम्) किं नु खलु गीतमेवंविधमाकर्ण्येष्टजनविराहाद् ऋतेऽपि बलवदुत्कण्ठितोऽस्मि। अथवा–

**रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्**
**पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः।**
**तच्चेतसा स्मरति नूनम् अबोधपूर्वं**
**भावस्थिराणि जननान्तरसौहृदानि।। 5–9।।**

(अस्मृतिनिमित्तम् उन्मनस्कत्वं रूपयति)

**कञ्चुकी**–(उपसृत्य) जयति जयति देवः। एते खलु हिमगिरेरुपत्यकारण्यवासिनः कण्वसन्देशमादाय सस्त्रीकास्तपस्विनः प्राप्ताः, इति श्रुत्वा देवः प्रमाणम्।

**राजा**–(सविस्मयम्) किं कण्वसन्देशहारिणः सस्त्रीकास्तपस्विनः।

**कञ्चुकी**–अथ किम्।

---

भो वयस्य, किं तावदस्या गीतिकाया गृहीतो भवतौक्षरार्थः। अन्तरेण वेदीं(देवीं) परिहायेत्यर्थः। यद्वान्तरेण तन्निमित्तमुपालम्भो दुर्वादः। हंसवतीति महादेवी नाम। यद् भवानाज्ञापयति। भो वयस्य गृहीतस्त्वया(स्तया) परकीयैर्हस्तैः शिखण्डके, लक्षणया पुच्छैः। अच्छभल्लो भल्लुकः। केरकशब्द प्राकृते आत्मीये वर्तते। तस्मादवीतरागस्येव श्रमणकस्य परिव्राजकस्य नास्ति मे मोक्षः। मोचनमपवर्गश्च। नागरको विदग्धः। का गतिः, कः प्रकारः।

रम्या०।। (5–9) रम्याणि कृत्य(वीक्ष्य) द्रव्याणि। नूनं निश्चये सम्भावनायां वा। अज्ञानपूर्वं स्मरति। परिभावयति भावेति।

हृदयदृढाणि प्रमाणमिति प्रवेशाप्रवेशयोरित्यर्थः। प्रमाणं हेतुमर्य्यादा शास्त्रेयत्ता प्रमातृष्वित्यमरः। "अथ किम्" स्वीकारे।

**राजा**–तेन हि विज्ञाप्यतां मद्वचनादुपाध्यायः सोमरातः। अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हसीति। अहमप्येतांस्तपस्विदर्शनोचिते देशे प्रतिपालयामि।

**कञ्चुकी**–यथाज्ञापयसि। (इति निष्क्रान्तः।)

**राजा**–(उत्थाय) वेत्रवति, अग्निशरणमार्गमादेशय।

**प्रतीहारी**–इदो इदो एदु देवो। (परिक्रम्य) भट्टा, एसो अहिणवसंमज्जणरमणीओ संणिहिदहोमधेणू अग्गिसरणालिन्दओ। ता आरोहदु देवो।

(इतो इतो एतु देवः। भर्तः, एषः अभिनवसम्मार्जनरमणीयः सन्निहितहोमधेनुः अग्निशरणालिन्दकः, तदारोहतु देवः।)

**राजा**–(साभिनयमारुह्य परिजनांसावलम्बी तिष्ठन्) वेत्रवति, किमुद्दिश्य तत्रभवता कण्वेन मत्सकाशमृषयः प्रेषिताः।

**किं तावद् व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं**
**धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम्।**
**आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-**
**मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः।। 5–10।।**

**प्रतीहारी**–देवस्य भुअसद्दणिव्वुदे अस्समे कुदो एदं। किं तु सुचरिदाहिणन्दिणो इसीओ देवं सभाजइदुं आगद त्ति तक्केमि।

(देवस्य भुजशब्दनिर्वृत्ते आश्रमे कुतः एतत्। किं तु सुचरिताभिनन्दिनः ऋषयः देवं समाजयितुमागताः इति तर्कयामि।)

(ततः प्रविशतो गौतमीसहितौ शकुन्तलामादाय,
कण्वशिष्यौ पुरतश्चैषां पुरोहित–कञ्चुकिनौ)

**कञ्चुकी**–इतो इतो भवन्तः।

---

पालयामि प्रतीक्षे। इत इत एतु देवः भट्टारकः। एषोऽभिनव सम्मार्जन-रमणीयः सन्निहित-होमधेनु-रग्निशरणालिन्दकस्तदारोहतु देवः। प्रघाण-प्रघणालिन्दा बहिर्द्वार प्रकोष्ठक इत्यमरः। अलिन्दो गृहलग्नगृहमिति शङ्करः।

किन्ता०।। (5–10) उत पक्षान्तरे। असत् होत्रादिकं, आहोस्विद्वितर्के विष्टम्भितः प्रतिरुद्धः। वीरुधां लतानां प्रतर्के ऊहः। देवस्य भुजशब्द[68] निर्वृत्ते आश्रमपदे। कुत इदं शब्दः ख्यातिर्दत्तेति शङ्करः[69]। किन्तु सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुम् अभिनन्दयितुमागता इति तर्कयामि।

---

68. देस्य स्तुजशब्द इति 4117 इत्यत्र पठ्यते।
69. शाङ्करपाठः इति 4118 अत्यत्र पठ्यते।

**शार्ङ्गरवः**–सखे शारद्वत,

**महाभागः कामं नरपतिरभिन्नस्थितिरसौ**
**न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते।**
**तथापीदं शश्वत्परिचितविविक्तेन मनसा**
**जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव।। 5–11।।**

**शारद्वतः**–शार्ङ्गरव, स्थाने खलु पुरप्रवेशात् तवेदृशः संवेगः। अहमपि,

**अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम्।**
**बद्धमिव स्वैरगतिर्जनमवशः सङ्गिनमवैमि।। 5–12।।**

**पुरोधाः**–अत एव भवद्विधा महान्तः।

**शकुन्तला**–(दुर्निमित्तमभिनीय) अम्मो, किं ति वामेदरं णअणं मे विप्फुरदि।

(अम्मो, किमिति वामेतरं नयनं मे विस्फुरति।)

**गौतमी**–जाद, पडिहदं अमङ्गलं। सुहाइं दे होन्तु। (जात, प्रतिहतममङ्गलम्। शुभानि ते भवन्तु।) (इति परिक्रामन्ति)

**पुरोधाः**–(राजानं निर्दिश्य) भोस्तपस्विनः, असावत्र वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयति वः। पश्यतैनम्।

**शार्ङ्गरव**–काममेतदभिनन्दनीयम्। तथापि वयमत्र मध्यस्थाः। कुतः–

**भवन्ति नम्रास्तरवः फलोद्गमै-**
**र्नवाम्बुभिर्दूरविलम्बिनो घनाः।**
**अनुद्धताः सत्पुरुषाः समृद्धिभिः**
**स्वभाव एवैष परोपकारिणाम्।। 5-13।।**

---

महा०।। (5-11) भगो[70] भाग्यं, स्थितिर्मर्यादा वर्णानां मध्येऽपथं विरुद्धधर्मः अपकृष्टः शूद्रः। इदं राजकुलं परिचितं विविक्तं निर्जनदेशो, यस्य परिचयेन विविक्तेन विजनेन स्थिरेणेति शङ्करदुर्बोधः। इदं जनाकीर्णं लग्नाग्निं गृहमिव मन्ये, स्थाने युक्तम्।

अभ्यक्तं 0।। (5-12) अवशोऽहं सङ्गिनं जनमेवंभूतमवैमि। स्नातः पुरुषोऽभ्यक्तं कृताभ्यङ्गं यथा वेति। एवमुत्तरत्र।। अम्मो, विस्मये कष्टे वा। किमिति वामेतरं नयनं मे स्फुरति। जात, प्रतिहतममङ्गलं, शुभानि ते भवन्तु। अभिनन्दनीयं श्लाघनीयम्, अत्र प्रमेये उदासीना न तु सम्बन्धिनः। राज्ञ एव सम्बन्धात् तथाप्यस्मद्विषयगौरवमीदृशं श्लाघ्यमेवेति भावः।

भव०।। (5-13) तरूणां घनानाञ्च उपमानविधेयोपन्यासः, तेन च दीपकालङ्कारः। स चार्थान्तरन्यासेन सह सङ्कीर्णः।

---

70. भागो इति 4118 अत्यत्र पठ्यते।

**प्रतीहारी**–देव, पसण्णमुहा सुत्थकप्पा विअ इसीओ दीसन्ति। (देव, प्रसन्नमुखाः स्वस्थकल्पाः इव ऋषयः दृश्यन्ते।)

**राजा**–(शकुन्तलां निर्वर्ण्य) अये–

**केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या।**
**मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम्।। 5-14।।**

**प्रतीहारी**–भट्टा, दंसणीआकिदी खु लक्खीअदि। (भर्तः, दर्शनीयाकृतिः खलु लक्ष्यते।)

**राजा**–भवतु, अनिर्वर्ण्यं खलु परकलत्रम्।

**शकुन्तला**–(उरसि हस्तं दत्त्वा, आत्मगतम्) हिअअ, किं एवं वेवसि। अज्जउत्तस्स भावाणुबन्धं सुमरिअ धीरत्तणं दाव अवलम्बसु। (हृदय, किमेवं वेपसे। आर्यपुत्रस्य भावानुबन्धं स्मृत्वा धीरत्वं तावदवलम्बस्व।)

**पुरोधाः**–(पुरो गत्वा) स्वस्ति देवाय। देव, एते खलु विधिवदर्चितास्तपस्विनः। कश्चिद् एतेषूपाध्यायसन्देशः। तं देवः श्रोतुमर्हति।

**राजा**–(सादरम्) अवहितोऽस्मि।

**शिष्यौ**–(हस्तमुद्यम्य) भो राजन्, विजयतां भवान्।

**राजा**–(सप्रणामम्) सर्वानभिवादये वः।

**शिष्यौ**–स्वस्ति भवते।

**राजा**–अपि निर्विघ्नं तपः।

**शिष्यौ**–

**कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि।**
**तमस्तपति घर्मांशौ कथमाविर्भविष्यति।। 5–15।।**

---

प्रसन्नमुखाः सुस्थकल्पा ऋषयो दृश्यन्ते। निर्वर्ण्य दृष्ट्वा।।

केयम्०।। (5-14)। तपोधनमध्ये केयमस्तीति शेषः। अवगुण्ठनं मस्तकाच्छादनवस्त्रम्। अत एव नातीति पाण्डुपत्राणामर्थात्। भर्ता महाराज। दर्शनीयाकृतिः खलु लक्ष्यति[71]। हृदय, किमेवं वेपसे, आर्यपुत्रस्य भावानुबन्धं स्मृत्वा धीरमवलम्बस्व। देवायेति, स्वस्ति योगे चतुर्थी (पा.सू. 2-3-16)। स्वस्त्याशीः क्षेमपुण्यादावित्यमरः। उद्यम्य उतोल्य, अपि प्रश्ने।

कुतः०।। (5-15) दृष्टान्तालङ्कारः। अनामयेति क्षत्रियाणां तथा प्रश्नस्यैवौचित्यात्। तथा च मनुः–ब्राह्मणं कुशलं पृच्छेत्, क्षत(त्र)बन्धुम(न्धोर)नामयम्।।

---

71. लक्ष्यति इत्यस्य स्थाने लक्ष्यते इति भवितुमर्हति। किन्तु प्राकृतभाषायाम् आत्मनेपदस्याभावादित्थमनुद्यते।

**राजा**–(आत्मगतम्) सर्वथार्थवान्खलु मे राजशब्दः। (प्रकाशम्) अथ भगवान्कुशली कण्वः।

**शार्ङ्गरवः**–राजन्, स्वाधीनकुशलाः खलु सिद्धिमन्तः। स भवन्तम् अनामयप्रश्नपूर्वकम् इदमाह।

**राजा**–किमाज्ञापयति।

**शार्ङ्गरवः**–यन्मिथः समवायादिमां मदीयां दुहितरं भवानुपयेमे तन्मया प्रीतिमता युवयोरनुज्ञातम्। कुतः–

**त्वमर्हतां प्राग्रहरः स्मृतोऽसि नः**
**शकुन्तला मूर्तिमतीव सत्क्रिया।**
**समानयंस्तुल्यगुणं वधूवरं**
**चिरस्य वाच्यं न गतः प्रजापतिः।। 5–16।।**

तदिदानीमापन्नसत्त्वेयं गृह्यतां सहधर्मचरणायेति।

**गौतमी**–भद्दमुह, वत्तुकाम म्हि। ण मे वअणावकासो त्थि कधिदु ति। (भद्रमुख, वक्तुकामास्मि। न मे वचनावकाशोऽस्ति कथयितुमिति।)

**राजा**–आर्ये, कथ्यताम्।

**गौतमी**–

**णावेक्खिओ गुरुअणो इमीअ ण तुमे वि पुच्छिआ बन्धू।**
**एक्कक्कमेण वरिए किं भणणउ एक्कमेक्कस्स।। 5-17।।**

**(नापेक्षितः गुरुजनः अनया न त्वया अपि पृष्टाः बन्धवः।**
**एकक्रमेण वृते किं भण्यताम् एकम् एकस्य)।। 5-17।।**

---

त्वमर्ह०।। (5-16) अर्हतां मान्यानां मध्ये त्वं प्राग्रहरः श्रेष्ठः। नोऽस्माकं स्मृतोऽसि। समानयन् एकीकुर्वन् संयोजयन्नित्यर्थः। वधूवरमिति द्वन्द्वे विभाषयैकवद्भावः। वाच्यं वाच्यतां चिरस्येत्यव्ययम्।। सहेति पत्न्या सहधर्माचरणमेव वैदिकम्। यदाह–यत् कर्तव्यं तदनया सहेति। भद्रमुख वक्तुकामास्मि, न च मे वचनावकाशोऽस्ति कथयितुमिति।

नापे[72]०।। (5–17) नापेक्षितो गुरुजनोऽनया त्वयापि न पृष्टो बन्धुः। अन्योऽन्येन वृत्ते किं भणित्वाऽन्योन्यस्य[73]।। एक्कक्कमेणेति अन्योन्यम् इत्यर्थे "एक्क क्कस्ये" त्यप्यन्योऽन्यार्थे।। शङ्करस्तु एकैकस्य चरिते किं भणतु। एकैकस्मिन्निति पठित्वा एकैकस्य एक एकस्मिन् चरिते। अन्योन्यस्य चरिते द्वयोः परस्परविषयकप्रणयकरणे एकोऽस्मद्रूपो जनः किं भणतु। अपि तु वचनावसर एव नास्तीत्याह।।

---

72. नावो इति 4118 इत्यत्र पठ्यते।

73. शङ्करेण "एकैकस्य चरिते किं भणतु एक एकस्मिन्" इति पठितम्।

**शकुन्तला**–किं णु क्खु अज्जउत्तो भणिस्सदि। (किं नु खलु आर्यपुत्रः भणिष्यति।)

**राजा**–(साशङ्कमाकुलमाकर्ण्य) अये, किमिदमुपन्यस्तम्।

**शकुन्तला**–(स्वगतम्) हुं सावलेवो से वअणावक्खेवो। (हं, सावलेपः अस्य वचनावक्षेपः।)

**शार्ङ्गरवः**–किं नाम किमिदमुपन्यस्तमिति। ननु भवानेव सुतरां लोकवृत्तान्तनिष्णातः।

**सतीमपि ज्ञातिकुलैकसंश्रयां**
**जनोऽन्यथा भर्तुमतीं विशङ्कते।**
**अतः समीपे परिणेतुरिष्यते**
**प्रियाप्रिया वा प्रमदा स्वबन्धुभिः।। 5–18।।**

**राजा**–किमत्रभवती मया परिणीतपूर्वा।

**शकुन्तला**–(आत्मगतम् सविषादम्) हिअअ, संवुत्ता दे आसङ्का। (हृदय, संवृत्ता ते आशङ्का।)

**शार्ङ्गरवः**–राजन्, **किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः**।

**राजा**–कुतोऽयम् असत्कल्पनाप्रसङ्गः।

**शार्ङ्गरवः**–(सक्रोधम्) **मूर्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तानाम्।। 5–19।।**

**राजा**–विशेषेणाधिक्षिप्तोऽस्मि।

**गौतमी**–(शकुन्तलां प्रति) जाद, मा लज्ज। अवणइस्सं दाव दे अवगुण्ठणं। तदो भट्टा तुमं अहिजाणिस्सदि।)

(जात, मा लज्जस्व, अपनेष्यामि तावत्तेऽवगुण्ठनम्। ततः भर्ता त्वाम् अभिज्ञास्यति।) (इति तथा करोति)

---

किं नु खल्वार्यपुत्रो भणिष्यति। हूं रोषसूचने। सावले[ति] सावलोपोऽस्य वचनावक्षेपः। किन्नामेति अन्न(र्थ)विशेषणं नाम नाट्यालङ्कारः।। तदुक्तम्–

उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनम् अनेकधा।
उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम्।।

इति, निष्णातोऽभिज्ञः।। सती०।। (5–18) अन्यथा व्यभिचारिणीम्। परिणेतुर्वल्लभस्य। अत्रभवती श्लाघ्या। हृदय, संवृत्ता ते आशङ्का[74]।

(5–19)।। मूर्च्छन्त्वमी विकाराः कृतानङ्गीकाररूपाः।। जाते, मा लज्जस्व, अपनेष्यामि तावत्तेऽवगुण्ठनम्। ततो भर्ता त्वामभिज्ञास्यति।।

---

74. प्रकाशितमैथिलपुस्तके खल्वाशङ्का इति पठ्यते।

**राजा**–(शकुन्तलां निर्वर्ण्य) (आत्मगतम्)

**इदमुपनतमेवं रूपमक्लिष्टकान्ति**
**प्रथमपरिगृहीतं स्यान्न वेत्यध्यवस्यन्।**
**भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं**
**न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम्।। 5–20।।**

**प्रतिहारी**–(स्वगतम्) अहो, धम्मावेक्खिदा भट्टिणो। ईदिसं णाम सुहोवणदं इत्थीरदणं पेक्खिअ को अण्णो विआरेदि। (अहो, धर्मापेक्षिता भर्तुः, ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कः अन्यः विचारयति।)

**शार्ङ्गरवः**–भो राजन्, किमिदं जोषमास्यते।

**राजा**–भोस्तपस्विन्, चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि। तत्कथमिमाम् अभिव्यक्तसत्त्वलक्षणामात्मानं क्षेत्रियमिव मन्यमानः प्रतिपत्स्ये।

**शकुन्तला**–(स्वगतम्) हद्धी हद्धी कधं परिणए ज्जेव सन्देहो। भग्गा दाणिं मे दूरारोहिणी आसालदा। (हा धिक् हा धिक, कथं परिणये एव सन्देहः। भग्नेदानीं मे दूरारोहिणी आशालता।)

**शार्ङ्गरवः**–मा तावत्–

**कृतावमर्शामनुमन्यमानः सुतां त्वया नाम मुनिर्विमान्यः।**
**दुष्टं प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येन।। 5–21।।**

---

इदम्०।। (5-20) एवमुपनतमेभिः स्तुयमानयोपस्थापितं रूपमवयवसौष्ठवं समुदायशोभेति शङ्करः। कान्तिर्यौवनजन्या शोभा प्रत्यवयवशोभेति शङ्करः। अन्ये त्वेवं रूपं स्त्रीरत्नमिति व्याचक्षते। अध्यवस्यन् चिन्तयन्।। अहो धर्मापेक्षिता भर्तुः। अत्र हेतुमाह–ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति। हद्धी शब्दः स्त्रियां देशी। किमितीति०। तूष्णीमर्थे मुखे[75] जोषम् इत्यमरः।। स्वीकरणं विवाहः। अभिव्यक्तेति। प्रौढगर्भा हा धिक् कथं परिणय एव सन्देहः। भग्नेदानीं मे दूरारोहिणी आशालता।

कृता०।। (5-21) त्वया तावन्मुनिः कण्वो मा विमान्यः अनादरणीयः। किं कृत्वा कृतावमर्षां स्वयं कृतपरिणयां अर्थात् त्वया सुतां अवमान्य अनादृत्य। हे मान्य। प्राचीन-विदेशीय-पुस्तकेऽयमेव पाठः। अनुमान्यमान इति पाठस्तु विचार्य्यः। येन मुनिना त्वं पात्रीकृतोऽसि पुरस्कृतोऽसि स्वकीयमर्थं प्रतिग्राहयता। त्वं कीदृक् दुष्टः कापटिकः दुष्टमिति केचित्। दस्युश्चोरः।।

इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन। अथवा आत्मा इदानीं मे मया शोधनीयः।

---

75. प्रकाशितमैथिलपुस्तके सुखे जोषम् इति पठ्यते।

**शारद्वतः**–शार्ङ्गरव, विरम त्वमिदानीम्। शकुन्तले, वक्तव्यमुक्तमस्माभिः। सोऽयमत्रभवान् एवमाह। दीयतामस्मै प्रतिवचनम्।

**शकुन्तला**–(स्वगतम्) इमं अवत्थन्तरं गदे तादिसे अणुराए किं वा सुमराविदेण। अधवा अप्पा दाणिं मे सोधणीओ। भोदु। ववसिस्सं। (प्रकाशम्) अज्जउत्त ......। (इत्यर्धोक्ते) अधवा संसइदो दाणिं एसो समुदाआरो। पोरव, जुत्तं णाम तुह पुरा अस्समपदे सब्भावुत्ताणहिअअं इमं जणं तधा समअपुव्वं सम्भाविअ सम्पदं ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं। (इदं अवस्थान्तरं गते तादृशे अनुरागे किं वा स्मारितेन। अथवा आत्मेदानीं मे शोधनीयः। भवतु। व्यवसिष्यामि। आर्यपुत्र ....., अथवा संशयितः इदानीमेषः समुदाचारः। पौरव, युक्तं नाम तव पुराश्रमपदे सद्भावोत्तानहृदयमिमं जनं तथा समयपूर्वं सम्भाव्य साम्प्रतमीदृशैः अक्षरैः प्रत्याख्यातुम्।)

**राजा**–(कर्णौ पिधाय) शान्तं शान्तम्।

**व्यपदेशमाविलयितुं समीहसे मां च नाम पातयितुम्।**
**कूलङ्कषेव सिन्धुः प्रसन्नमोघं तटतरुं च।। 5–22।।**

**शकुन्तला**–भोदु, परमत्थदो जइ परपरिग्गहसङ्किणा तए एदं पउत्तं ता अहिण्णाणेण केणावि तुह सन्देहं अवणइस्सं। (भवतु, परमार्थतः यदि परपरिग्रहशङ्किना त्वया इदं प्रत्युक्तं, तद् अभिज्ञानेन केनापि तव सन्देहम् अपनेष्यामि।)

**राजा**–प्रथमः कल्पः।

**शकुन्तला**–(मुद्रास्थानं परामृश्य) हद्धी हद्धी। अङ्गुलीअअसुण्णा मे अङ्गुली। (हा धिक् हा धिक्। अङ्गुरीयकशून्या मे अङ्गुली।)

(इति सविषादं गौतमीमीक्षते)

**गौतमी**–जाद, णं दे सक्कावदारे सचीतित्थे उदअं वन्दमाणाए पब्भट्ठं अङ्गुलीअअं। (जात, ननु ते शक्रावतारे शचीतीर्थे उदकं वन्दमानायाः प्रभ्रष्टमङ्गुरीयकम्।)

---

शङ्करस्तु शोचनीय इति पठित्वा, सदसि तादृशं रहस्यप्रकाशनात् त्रपया शोचनीया भविष्यसीति भावः इत्याह। भवतु व्यवस्यामि रहस्यं वक्तुमिति शेषः। वदिष्यामीति शाङ्करः पाठः।

आर्यपुत्र, प्रथमं संशयित, इदानीमेष समुदाचारः। कलत्रभावस्य सन्दिग्धत्वादित्यर्थः। पौरव, युक्तं नाम तव पुरा आश्रमपदे सद्भावोत्तान हृदयमिमं जनं तथा समयपूर्वं सम्भाव्य सांप्रतमीदृशैरक्षरैः प्रत्याख्यातुम्। वारणे शान्तमव्ययमिति कोषः। ईदृश व्याहारो निवार्य्यतामित्यर्थः।

व्यप० ।। (5–22) व्यपदेशः कुलं नाम वा। आविलयितुम् दूषयितुम्, कूत(ल)ङ्कषा तटवारणी सिन्धुर्नदी, ओघं प्रवाहम्। भवतु, परमार्थतो यदि परपरिग्रहशङ्किना त्वया इदं प्रयुक्तम्, तदभिज्ञानं केनापि तव सन्देहम् अपनेष्यामि। कल्पः पक्षः, प्रकारो वा। मुद्राङ्गुरीयम्। हा धिक् अङ्गुरीयशून्यं मेऽङ्गुलम्।

**राजा**–इदं तत्प्रत्युत्पन्नमतित्वं स्त्रीणाम्।

**शकुन्तला**–एत्थ दाव विहिणा दंसिदं पहुत्तणं। अवरं दे कधइस्सं। (अत्र तावद्विधिना दर्शितं प्रभुत्वम्। अपरं ते कथयिष्यामि।)

**राजा**–श्रोतव्यमिदानीं संवृत्तम्।

**शकुन्तला**–णं एक्कदिअसं वेदसलदामण्डवे णलिणीवत्तभाअणगदं उदअं तुह हत्थे संणिहिदं आसि। (नन्वेकदिवसं वेतसलतामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितम् आसीत्।)

**राजा**–शृणुमस्तावत्।

**शकुन्तला**–तक्खणं सो मम पुत्तकिदओ मिअसावओ उवत्थिदो। तदो तए अअं दाव पढमं पिवदु त्ति अणुकम्पिणा उवच्छन्दिदो। ण उण दे अवरिचिदस्स हत्थादो उदअं उवगदो पादुं। पच्छा तस्सिं जेव उदए मए गहिदे किदो तेण पणओ। एत्थन्तरे विहसिअ भणिदं तए। सच्चं सव्वो सगन्धे वीससदि जदो दुवे वि तुम्हे आरण्णकाओ त्ति। (तत्क्षणं सः मम पुत्रकृतकः मृगशावकः उपस्थितः। ततः त्वया अयं तावत् प्रथमं पिबतु इति अनुकम्पिना उपच्छन्दितः। न पुनः ते अपरिचितस्य हस्ताद् उदकमुपगतः पातुम्। पश्चात्तस्मिन्नेव उदके मया गृहीते कृतः तेन प्रणयः। अत्रान्तरे विहस्य भणितं त्वया–सत्यं, सर्वः सगन्धे विश्वसिति, यतः द्वावपि युवामारण्यकौ इति।)

**राजा**–आभिस्ताभिरात्मकार्यनिर्वर्त्तिनीभिर्मधुराभिरनृतवाग्भिराकृष्यन्ते विषयिणः।

**गौतमी**–महाराअ, णारिहसि एवं मन्तिदुं। तवोवणसंवड्ढिदो क्खु अअं जणो अणहिण्णो केदवस्स।

(महाराज, नार्हसि एवं मन्त्रयितुम्। तपोवनसंवर्धितः खल्वयं जनः अनभिज्ञः कैतवस्य।)

---

जाते, न खलु शक्रावतारे शचीतीर्थोदकं वन्दमानायाः प्रभ्रष्टमङ्गुरीयकम्। नः काकौ। अत्र तावद्विधिना दर्शितं प्रभुत्वम्। अपरं कथयिष्यामि।

नन्वेकदिवसे वेतसलतामण्डपे नलिनीपत्रभाजनगतम् उदकं तव हस्ते सन्नि[हि]तमासीत्। तत् क्षणं स मम कृतकपुत्रो मृगशावक उपस्थितः, ततस्त्वया“ ऽयन्तावत् प्रथमं पिबत्वि”ति अनुकम्पिना उपच्छन्दितः प्रलोभितः। [न] पुनस्तेऽपचि(रिचि)तस्य हस्तादुदकमुपगतः पातुं। पश्चात् तस्मिन्नेवोदके मया गृहीते कृतस्तेन प्रणयो विश्वासः।

अत्रान्तरे विहस्य त्वया भणितं “सत्यं, कु(स)र्व्वः सगन्धे सदृशे सन्निहिते वाश्वसिते”। गन्धो लेशे तथामोदे गन्धः सम्बन्धमात्रक इति कोषः। यतो द्वावपि युवामारण्यकाविति। महाभाग, नार्हसि एवं मन्त्रयितुं तपोवनसम्वर्द्धितः खल्वयं जनः अनभिज्ञः कैतवस्य।।

स्त्रीणां०।। (5-23) अमानुषीणां ज्ञानशून्यानामर्थात् प्राक् पूर्व्वं जातं समूहं पक्षिभिः

**राजा**–तापसवृद्धे,

**स्त्रीणामशिक्षितपटुत्वममानुषीषु**
**संदृश्यते किमुत याः प्रतिबोधवत्यः।**
**प्रागन्तरीक्षगमनात्स्वमपत्यजातम् ,**
**अन्यद्विजैः परभृताः किल पोषयन्ति।। 5–23।।**

**शकुन्तला**–(सरोषम्) अणज्ज, अत्तणो हिअआणुमाणेण किल सव्वं एदं पेक्खसि। को णाम अण्णो धम्मकञ्चुअववदेसिणो तणच्छण्णकूवोवमस्स तुह अणुकारी भविस्सदि। (अनार्य, आत्मनः हृदयानुमानेन किल सर्वमेतत्प्रेक्षसे। कः नामान्यः धर्मकञ्चुकव्यपदेशिनः तृणच्छन्नकूपोपमस्य तवानुकारी भविष्यति।)

**राजा**–(स्वगतम्) वनवासादविभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते। तथा हि–

**न तिर्यगवलोकितं भवति चक्षुरालोहितं**
**वचोऽपि परुषाक्षरं न च पदेषु संसज्जते।**
**हिमार्त इव वेपते सकल एष बिम्बाधरः**
**स्वभावविनते भ्रुवौ युगपदेव भेदं गते।। 5-24।।**

अथवा सन्दिग्धबुद्धिं मामधिगत्याकैतवच्छायया कोपोऽस्याः। तथा ह्यनया–

**मय्येव विस्मरणदारुणचित्तवृत्तौ वृत्तं रहः प्रणयमप्रतिपद्यमाने।**
**भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या भग्नं शरासनमिवातिरुषा स्मरस्य।। 5–25।।**

(प्रकाशम्) भद्रे, प्रथितं दुःषन्तचरितं प्रजासु। नापीदं दृश्यते।

[ **शकुन्तला**–

**तुह्मे ज्जेव पमाणं जाणध धम्मत्थिदिञ्च लोअस्स।**
**लज्जाविणिज्जिदाओ जाणन्ति ण किम्पि महिलाओ।। 5–26।।**

---

अर्थान्तरन्यासः। प्रतिवस्तूपमेत्यन्यः। अनार्य्य, आत्मनो हृदयानुमानेन सर्वमेतत् प्रेक्षसे। को नामा नान्यो धर्म्मकञ्चुकव्यपदेशिनः धर्म्मानुरुद्धात्मकत्व-प्रकाशिनः। "पावसिनो" इति प्रायः पाठः। तृणच्छन्नकृ(कू)पोपमस्य तवानुकारी भविष्यति। अविद्भ(भ्र)मो विलासशून्यः।। न ति०।। (5-24) तिर्य्यक् कुटिलं न भवतीत्यन्वयः आलोहितमत्यन्तारुणं तव्यास्ववास स्यात् पदेषु सुप्तिङ् रूपेषु संसज्यते स्खलति, न संशय्यते सन्दिग्धं न भवति। ततो गद्गदस्वरादि प्रायो वैदग्धे भवतीति शङ्करः। प्रकाशमत्यर्थं कामिनीभावविलासम् अभिनेतुं तिर्य्यग्वीक्ष्यते ईषदरुणलोचना च स्यात् अपराद्धं सकम्पं करोति ईषदानतां भ्रुवमेकां विभिन्नां करोति इयन्तु न तथेति भावः। मय्येवेति।। (5–25) सुगमम्।। तुस्थे(ह्मे)०।। (5–26)। यूयमेव प्रमाणं जानीथ धर्म्मस्थितिञ्च लोकस्य, लज्जाविनिर्ज्जिता जानन्ति न किमपि महिलाः। गाथेयं, पुराणपुस्तके न दृश्यते, नातिचारुः।

सुष्ठु इदानीं स्वच्छन्दचारिणी समुपाश्रिता। अर्थादनेन या एतस्य पुरुवंशप्रत्यायनमुखमधुना

**(यूयमेव प्रमाणं जानीथ धर्मस्थितिश्च लोकस्य।**
**लज्जाविनिर्जिता जानन्ति न किमपि महिला:)।। 5–26।।]**[76]

सुट्ठु। इदाणिं अत्तच्छन्दाणुआरिणी संवुत्त म्हि जा इमस्स पुरुवंसस्स पच्चएण मुहमहुणो हिअअपत्थरस्स हत्थब्भासं उवगदा।

(सुष्ठु, इदानीमात्मच्छन्दानुकारिणी संवृत्तास्मि, या अस्य पुरुवंशस्य प्रत्ययेन मुखमधो: हृदयप्रस्तरस्य हस्ताभ्यासमुपगता।)

(इति पटान्तेन मुखमावृत्य रोदिति।)

**शार्ङ्गरव:**–इत्थमप्रतिहतं चापलं दहति।

**अत: समीक्ष्य कर्तव्यं विशेषात्सङ्गतं रह:।**
**अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्।। 5–27।।**

**राजा**–अयि भो:। किमत्रभवतीवचनसम्प्रत्ययादेवास्मान्सम्भृतदोषैरधिक्षिपथ।

**शार्ङ्गरव:**–(सासूयम्) श्रुतं भवद्भिरधरोत्तरम्।

**आ जन्मन: शाठ्यमशिक्षितो यस्तस्याप्रमाणं वचनं जनस्य।**
**पराभिसंधानमधीयते यै र्विद्येति ते सन्ति किलाप्तवाच:।। 5–28।।**

**राजा**–हंहो सत्यवादिन्, अभ्युपगतं तावदस्माभिरेवंविधा एव वयम्। किं पुनरिमाम् अभिसन्धाय लभ्यते।

**शार्ङ्गरव:**–विनिपात:।

**राजा**–विनिपात: पौरवैर्लभ्यत इत्यश्रद्धेयमेतत्।

**शार्ङ्गरव:**–भो राजन्, किमत्रोत्तरोत्तरै:। अनुष्ठितो गुरुनियोग:। सम्प्रति निवर्तामहे वयम्।

**तदेषा भवत: पत्नी त्यज वैनां गृहाण वा।**
**उपयन्तुर्हि दारेषु प्रभुता सर्वतोमुखी।। 5–29।।**

गौतमि, गच्छाग्रत:। (इति प्रस्थिता:)

---

मधुवचनस्येत्यर्थ:। हृदयशस्त्रधारकस्य हस्ताभ्यासमुपगता। अभ्यास: समीपम्। अधरोत्तरं निकृष्टप्राधान्यम्।।

आ ज०।। (5–28) अशिक्षित इति कर्तरि क्त:। अभिज्ञानं हिंसा मद्येति सोलुण्ठम्। हं हो सत्यवादिन् इति अक्षमा नाट्यालङ्कार:। तदुक्तम्–अक्षमा स्यात् परिभव: स्वल्पोऽपि न विसह्यत इति। सक्रोधम् आह–"विनिपातो" नरकगमनम्। तदे०।। (5–29) उपयन्तु: परिणेतु:, सर्वतोमुखी सर्वकरणसमर्था।

---

76. अंशोऽयं रिचार्ड पिशेलेन सम्पादिते पाठे न स्वीकृत:।

**शकुन्तला**–अहं इमिणा दाव किदवेण विप्पलद्धा। तुम्हे वि मं परिच्चअध। (अहं अनेन तावत्कितवेन विप्रलब्धा। यूयमपि मां परित्यजथ।)

(इत्यनुप्रतिष्ठते)

**गौतमी**–(परिवृत्त्यावलोक्य च) वच्छ सङ्गरव, अणुगच्छदि णो करुणपरिदेविणी सउन्तला। पच्चादेसपिसुणे भत्तारे किं करेदु तवस्सिणी। (वत्स शार्ङ्गरव, अनुगच्छति नः करुणपरिदेविनी शकुन्तला। प्रत्यादेशपिशुने भर्तरि किं करोतु तपस्विनी।)

**शार्ङ्गरवः**–(सरोषं निवृत्य) आः पुरोभागिनि। किमिदं स्वातन्त्र्यमवलम्बसे।

(शकुन्तला भीता वेपते)

**शार्ङ्गरवः**–शृणोतु भवती।

**यदि यथा वदति क्षितिपस्तथा**
**त्वमसि किं पितुरुत्कुलया त्वया।**
**अथ तु वेत्सि शुचि व्रतमात्मनः**
**पतिगृहे तव दास्यमपि क्षमम्।। 5–30।।**

तिष्ठ। साधयामो वयम्।

**राजा**–भोस्तपस्विन्, किमत्रभवती विप्रलभ्यते। पश्य–

**कुमुदान्येव शशाङ्कः, सविता बोधयति पङ्कजान्येव।**
**वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः।। 5–31।।**

**शार्ङ्गरवः**–राजन्, अथ पुनः पूर्ववृत्तं व्यासङ्गाद् विस्मृतं भवेत् तदा कथम् अधर्मभीरो-र्दारपरित्यागः।

**राजा**–भवन्तमेव गुरुलाघवं पृच्छामि।

**मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये।**
**दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः।। 5–32।।**

---

अहमेतेन तावत् कितवेन विप्रलब्धा। यूयमपि मां परित्यजत। वत्स शार्ङ्गरव अनुगच्छति नः करुणपरिदेविनी। प्रत्यादेशपिशुने भर्तरि किं करोतु तपस्विनी दीना। आः कोपे। दोषैकदृक् पुरोभागीत्यमरः।

यदि०।। (5-30) उत्कुलया कूलमुल्लङ्घ्य स्थितया। अथ पक्षान्तरे।

कुमु०।। (5-31) परिग्रहः पत्नी अर्थान्तरन्यासः। अथेति तत् प्रासनाख्य नाट्यालङ्कारः। तदुक्तम्–उत् प्रासन्तूपहासो योऽसाधौ साधुमानिनीति।

मृ(मूढ)०।। (5-32) अहो विकल्पे, परमापरिग्रहणा दारत्याग एव वरमिति भावः। नैमित्तिकैर्गणकैः।

**पुरोधाः**–(विचार्य) यदि तावदेवं क्रियते।

**राजा**–अनुशास्तु गुरुः।

**पुरोधाः**–अत्रभवती तावद् आप्रसवादस्मद्गृहे तिष्ठतु।

**राजा**–कुत इदम्।

**पुरोधाः**–त्वं साधुनैमित्तिकैरादिष्टपूर्वः प्रथममेवोभयचक्रवर्तिनं पुत्रं जनयिष्यसीति। स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भवति, ततः प्रतिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि। विपर्यये त्वस्याः पितुः समीपगमनं स्थितमेव।

**राजा**–यथा गुरुभ्यो रोचते।

**पुरोधाः**–(उत्थाय) वत्से, इतो इतोऽनुगच्छ माम्।

**शकुन्तला**–भअवदि वसुंधरे। देहि मे अन्तरं। (भगवति वसुन्धरे, देहि मे अन्तरम्।)

(इति सह पुरोधसा तपस्विभिर्गौतम्या च रुदती प्रस्थिता।
राजा शापव्यवहितस्मृतिः शकुन्तलामेव चिन्तयति।)

(नेपथ्ये) आश्चर्यम् आश्चर्यम् ..........।

**राजा**–(कर्णं दत्त्वा) किं नु खलु स्यात्।

**पुरोधाः**–(प्रविश्य, सविस्मयम्) देव, अद्भुतं खलु वृत्तम्।

**राजा**–किमिव।

**पुरोधाः**–परावृत्तेषु कण्वशिष्येषु–

**सा निन्दन्ती स्वानि भाग्यानि बाला बाहूत्क्षेपं रोदितुं च प्रवृत्ता।**

**राजा**–किं तदानीम्।

**पुरोधाः**– **स्त्रीसंस्थानं चाप्सरस्तीर्थमारात्**
**क्षिप्त्वैवाशु ज्योतिरेनां तिरोऽभूत्।। 5–33।।**

(सर्वे विस्मयं रूपयन्ति)

---

(भगवति) वसुधे, देहि मे अन्तरम् अवकाशम्।।

सा नि०।। (5-33)।। बाहूत्क्षेपं यथा स्यात्। स्त्रीभिः स्त्रिया इव संस्थानम् आकृतिर्यस्य। आरान्निकट-दूरान्तिकार्थादिति षष्ठ्यर्थे द्वितीया। प्रत्यादिष्टो निराकृतः।।

**राजा**–गुरो, प्रथमम् एवास्माभिरेषोऽर्थः प्रत्यादिष्टः। किं मृषा तर्केणान्विष्यते। विश्राम्यताम्।

**पुरोधाः**–विजयस्व। (इति निष्क्रान्तः)

**राजा**–वेत्रवति, पर्याकुल इवास्मि। शयनीयगृहमादेशय।

**प्रतीहारी**–इदो इदो एदु देवो। (इतो इतो एतु देव।)

**राजा**–(परिक्रामन् स्वगतम्)

**कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम्।**
**बलवत्तु दूयमानं प्रत्यायतीव मां हृदयम्।।5–34।।**

(इति निष्क्रान्ताः सर्वे)

।। पञ्चमोऽङ्कः।।

---

कामं०।। (5–34) बलवदतिशयेन दूयमानं हृदयं कर्तृ।।

**।। इति पञ्चमोऽङ्कः।।**

—•—

## ।। षष्ठोऽङ्कः ।।

(ततः प्रविशति नागरकः पश्चाद्बाहुबन्धं पुरुषमादाय रक्षिणौ च)

**रक्षिणौ**–(पुरुषं ताडयित्वा) हण्डे कुम्भिलआ। कधेहि कहिं तए एशे महालदणभाशुले उक्किण्णणाम कले लाअकीए अङ्गुलीअए शमाशादिदे। (हण्डे कुम्भीलक, कथय कुत्र त्वया एतन्महारत्नभासुरम् उत्कीर्णनामाक्षरं राजकीयमङ्गुरीयकं समासादितम्।)

**धीवरकः**–(भीतिनाटितकेन) पशीदन्तु भावमिश्शा। ण हगे ईदिशश्श अकय्यश्श कालके। (प्रसीदन्तु भावमिश्राः, नाहम् ईदृशस्याकार्यस्य कारकः।)

**एकः**–किं णु क्खु शोहणे बम्हणे शि त्ति कदुअ लञ्ञा दे पलिग्गहे दिण्णे। (किं नु खलु शोभनः ब्राह्मणोऽसि इति कृत्वा राज्ञा ते परिग्रहः दत्तः।)

**धीवरकः**–शुणध दाव। हगे क्खु शक्कावदालवाशी धीवले। (शृणुत तावत् अहं खलु शक्रावतारवासी धीवरः।)

**द्वितीयः**–हण्डे पाडच्चला, किं तुमं अस्मेहिं यादिं वशदिं च पुश्चिदे। (हण्डे पाटच्चरः, किं त्वम् अस्माभिः जातिं वसतिं च पृष्टः।)

**नागरकः**–सूअअ, कधेदु सव्वं कमेण। मा णं पडिबन्धेध। (सूचक, कथयतु सर्वं क्रमेण। मा एनं प्रतिबध्नीतम्।)

**उभौ**–यं लाउत्ते आणवेदि। लवेहि ले लवेहि। (यदीश्वरः आज्ञापयति। लप रे लप।)

**धीवरकः**–शे हगे यालवडिशप्पहुदीहिं मश्चबन्धणोवाएहिं कुडुम्बभलणं कलेमि। (सोऽहं जालबडिशप्रभृतिभिः मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि।)

**नागरकः**–(प्रहस्य) विसुद्धो दाणिं दे आजीवो। (विशुद्धः इदानीं ते आजीवः।)

---

हण्डे नीचसम्बोधने। बन्दिचोरो याचनः स्यात्। कुम्भीलः सन्नि(न्धि)कारक इति हारावली। अरे कुम्भीलक कथय कुत्र त्वया इदं महारत्नभास्वरम् उत्कीर्णनामाक्षरं राजकीयमङ्गुरीयकं समासादितम्। नाटितकमभिनयः। भावा मान्याः मिश्राः प्रधानाः। नाहमीदृशस्याकार्य्यस्य कारकः। किं खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा ते प्रतिग्रहो दत्तः[77]। शृणु तावद् अहं खलु शक्रावतारवासी धीवरः। शक्रेति तीर्थभेदः। हण्डे पाटच्चर चौरः। किं त्वमस्माभिर्जातिं वसतिञ्च पुष्टः। सूचक कथयतु सर्वं क्रमेण। मैनं प्रतिबध्नीहि। सूचकेति रक्षकनाम। यदीश्वर आज्ञापयति। न पा(आवुत)वेत पवातनशब्द ईश्वरे देशी। सोऽहं जालबडिशप्रभृतिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि। बडिशं मत्स्यवेधनमित्यमरः। विशुद्ध इदानीं ते आजीवः, जीवनोपायः। भर्तु(र्त)र्मा एवं भण।

---

77. इतः परं "कुतोपि स्वेच्छया प्राप्तः संगतो नोभयोरपि। विष्कंभकः। सविज्ञेयः–थार्थस्यापि सूचकः। असूचितस्य पात्रस्य प्रवेशो नैव दृश्यते। अतः प्रधानपात्राणां सूचकः स्यात्। प्रवेशकः। बीजं बिन्दुः पताका न प्रकरी कार्यमेव च। अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधिः" इत्यधिकम् 4118 इत्यत्रैव पठ्यते।

**धीवरकः**–भस्टके, मा एवं भण। (भर्तः, मैवं भण।)

**शहये किल ये वि णिन्दिदे ण हु शे कम्म विवय्यणीअके।**
**पशुमालिं कलेदि दालुणं अणुकम्पामिदुले वि शोणिके।।6–1।।**
**(सहजं किल यद्यपि निन्दितं न खलु तत् कर्म विवर्जनीयम्।**
**पशुमारणं करोति दारुणमनुकम्पामृदुलोऽपि सौनिकः)।।6–1।।**

**नागरकः**–तदो तदो। (ततस्ततः।)

**धीवरकः**–अध एक्कदिअशं मए लोहिदमश्चके खण्डशो कप्पिदे। यावतश्श उदलब्भन्तले एदं महालदणभाशुलं अङ्गुलीअअं पेस्कामि। पश्चाइध विक्कअस्तं णं दंशअन्ते य्येव गहिदे भावमिश्शेहिं। एत्तिके दाव एदश्श आगमे। अधुणा मालेध वा कुस्टेध वा। (अथैकदिवसं मया रोहितमत्स्यः खण्डशः कल्पितः। यावत्तस्य उदराभ्यन्तरे एतत् महारत्नभासुरमङ्गुरीयकं प्रेक्षे। पश्चादिह विक्रयार्थमेतद्दर्शयन्नेव गृहीतः भावमिश्रैः। एषः तावदेतस्यागमः। अधुना मारयत वा कुट्टयत वा।)

**नागरकः**–(अङ्गुरीयकमाघ्राय) जाणुअ, मच्छोदरसंठिदं ति णत्थि संदेहो। तधा अअं से विस्सगन्धो। आगमो दाणिं एदस्स विमरिसिदव्वो। ता एध राअउलं जेव गच्छम्ह। (जानुक, मत्स्योदरसंस्थितमिति नास्ति सन्देहः। तथायमस्य विस्रगन्धः आगमः इदानीमेतस्य विमर्ष्टव्यः। तदितः राजकुलमेव गच्छामः।)

**रक्षिणौ**–(धीवरं प्रति) गश्च ले गण्ठिश्चेदआ गश्च। (गच्छ रे ग्रन्थिच्छेदक गच्छ।)

(इति परिक्रामन्ति)

---

सह० ।। (6–1)

सहजं किल यदपि निन्दितं न खलु तत् कर्म विवर्जनीयम्।
पशुमारणं करोति कारणात् षट्कर्म्मा विदुरो श्रोत्रियः।।

सहजं कुलक्रमागतम्। हेतुमाह विदुरो विद्वान् पशुमारणं करोति कारणात्। महोक्षं वा महाजं वा श्रोत्रियेत्यादिः स्मृतिवचनात्। यज्ञादीति षट्कर्म्माणि त्रिभिः श्रोत्रिय इत्यादि। तथा च विरुद्धमेतत् परम्परयायातं कुर्वतो नीचस्य मम न दूषणमिति भावः।। ततस्ततः। तत एकदिवसे मया रोहितमत्स्यः खण्डशः कल्पितः कृतो वा। यावत्तस्योदराभ्यन्तरे इदं महारत्नभास्वरम् अङ्गुरीयकं प्रेक्ष्ये। यावद् वाक्यालङ्कारे। पश्चादिह विक्रियार्थमिदं दर्शयन्नेव गृहीतो भावमिश्रैः, एतावानेवास्यागमः। अधुना मारयथ कर्तु(र्त)यथ वा।।

जानुकेत्यपर रक्षकस्य नाम। जानुक! मत्स्योदरसंस्थितमिति नास्ति सन्देहः। यथास्य विस्रगन्ध आमिषगन्धो वेति आगम इदानीमेतस्य विलषि(मर्षि)तव्यः। मत्स्योदक(र)प्रवेशः कथमस्येति ज्ञातव्यमित्यर्थः। तद्राजकुलमेव गच्छामः। तत्रैव वृत्तान्तमिदं ज्ञास्याम इति भावः।

आगच्छ रे ग्रन्थिच्छेदक आगच्छ। आगच्छ रे ग्रन्थिच्छेदक आगच्छ।

**नागरकः**–सूअअ, इध गोउरदुआरे अप्पमत्ता पडिवालेध मं जाव राअउलं पविसिअ णिक्कमामि। (सूचक, इह गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं मां, यावद् राजकुलं प्रविश्य निष्क्रामामि।)

**उभौ**–पविशदु लाउत्ते शामिप्पशादस्तं। (प्रविशतु ईश्वरः स्वामिप्रसादार्थम्।)

**नागरकः**–तधा। (तथा) (इति निष्क्रान्तः)

**सूचकः**–याणुअ, चिलाअदि लाउत्ते। (जानुक, चिरायति ईश्वरः।)

**जानुकः**–णं अवशलोवशप्पणीआ खु लाआणो होन्ति। (ननु अवसरोपसर्पिणीयाः खलु राजानः भवन्ति।)

**सूचकः**–याणुअ, स्फुलन्ति मे अग्गहस्ता। (धीवरं निर्दिश्य) इमं गण्ठिश्चेदअं वावादेदुं। (जानुक, स्फुरन्ति मे अग्रहस्ताः। इमं ग्रन्थिच्छेकं व्यापादयितुम्।)

**धीवरकः**–णालिहदि भावे अकालणमालके भविदुं। (नार्हति भावः अकारणमारकः भवितुम्।)

**जानुकः**–(विलोक्य) एशे अस्माणं ईशले पत्ते गेण्हिअ लाअशाशणं। (धीवरं प्रति) ता शउलाणं मुहं पेस्कशि अधवा गिद्धशिआलाणं बली भविश्शशि। (एषः अस्माकम् ईश्वरः प्राप्तः गृहीत्वा राजशासनम्। तत् स्वकुलानां मुखं प्रेक्षसे अथवा गृध्रशृगालानां बलिः भविष्यसि।)

**प्रविश्य नागरकः**–सिग्धं सिग्धं एदं। (शीघ्रं शीघ्रं एतम्।) (इत्यर्धोक्ते)

**धीवरकः**–हा हदे स्मि। (हा हतोऽस्मि।) (इति विषादं नाटयति)

**नागरकः**–मुञ्चेध रे मुञ्चेध जालोवजीविणं। उववण्णो से किल अङ्गुलीअअस्स आगमो। अम्हसामिणा जेव मे कधिदं। (मुञ्चतं रे मुञ्चतम् जालोपजीविनम्। उपपन्नः अस्य किल अङ्गुरीयकस्यागमः। अस्मत्स्वामिना एव मे कथितम्।)

**सूचकः**–यधा आणवेदि लाउत्ते। यमवशदिं गदुअ पडिणिउत्ते क्खु एशे।

---

**सूचक**–इह गोपुरद्वारे अप्रमत्ताववहितौ परिपालये मां। यावद् राजकुलं प्रविश्य निष्क्रामामि। प्रविशन्त्वीश्वरः स्वामिप्रसादार्थम्। चिरयतीश्वरः। नन्ववसरोपसर्पणीया राजानो भवन्ति। जानुक, स्फुरति मेऽयं हस्तः, इमं ग्रन्थिच्छेदकं व्यापादयितुम्। नार्हति भावोऽकारणमारको भवितुम्। एषोऽस्माकमीश्वरः प्राप्तः गृहीत्वा राजशासनं। आज्ञां तत् कुल्यानां बान्धवानां शकु{न्त}लानां मत्स्यानामामुखं प्रेक्षय। अथवा शृगालगृधबलिर्भव बलिरूपद्वा(हा)रः।। शीघ्रं शीघ्रमेतम्। हा हतोऽस्मि। मुञ्चतं जालोपजीविनम्। उपपन्नः किलास्याङ्गुरीयकस्यागमः। अस्मत् स्वामिना यावदस्य कथितं अस्याङ्गुरीयस्य तत्त्वं कथितमित्यर्थः। यथाज्ञापयतीश्वरः। यमवसतिं गत्वा प्रतिनिवृत्तं वपुषः। भर्तुस्तव केल/रकं(भर्तस्तव क्रीतं) तदीयमित्यर्थः। साम्प्रतमस्माकजीवितम्। उव(प)क्रीतमिति तु शङ्करव्याख्या विचार्य्या।।

(यथा आज्ञापयति ईश्वरः। यमवसतिं गत्वा प्रतिनिवृत्तः खल्वेषः।)

(इति धीवरं बन्धनान्मोचयति)

**धीवरकः**–(नागरकं प्रणम्य) भस्टके, तव केलके मम यीविदे। (भर्तः, त्वदीयं मम जीवितम्।)

(इति पादयोः पतति।)

**नागरकः**–उत्थेहि उत्थेहि, एसो भट्टिणा अङ्गुलीअअमुल्लसंमिदो पारिदोसिओ दे पसादीकिदो। ता गेण्ह एदं। (उत्तिष्ठ उत्तिष्ठ, एतद्भर्त्रा अङ्गुरीयकमूल्यसंमितं पारितोषिकं ते प्रसादीकृतम्। तत् गृहाण एतत्।) (इति धीवराय कटकं प्रयच्छति)

**धीवरकः**–(सहर्षं प्रतिगृह्य) अणुग्गहिदे स्मि। (अनुगृहीतोऽस्मि।)

**जानुकः**–एशे क्खु लञ्ञा तधा णाम अणुग्गहिदे यं शूलादो ओदालिअ हस्तिस्कन्धं शमालोविदे। (एषः खलु राज्ञा तथा नाम अनुगृहीतः यत् शूलादवतार्य हस्तिस्कन्धं समारोपितः।)

**सूचकः**–लाउत्ते, पालिदोशिए कधेदि महालिहलदणेण तेण अङ्गुलीअएण शामिणो बहुमदेण होदव्वं त्ति। (ईश्वर, पारितोषिकं कथयति महार्हरत्नेन तेन अङ्गुरीयकेन स्वामिनः बहुमतेन भवितव्यमिति।)

**नागरकः**–णं तस्सिं भट्टिणो महारिहरदणं ति ण परिदोसो। एत्तिकं उण। (ननु तस्मिन् भर्तुः महार्हरत्नमिति न परितोषः। एतावत् पुनः।)

**उभौ**–किं णाम। (किं नाम।)

**नागरकः**–तक्केमि तस्स दंसणेण को वि हिअअट्ठिदो जणो भट्टिणा सुमरिदो त्ति जदो तं पेक्खिअ मुहुत्तअं पइदिगम्भीरो वि पज्जुस्सुअमणो आसि। (तर्कयामि तस्य दर्शनेन कोऽपि हृदयस्थितः जनः भर्त्रा स्मृतः इति, यतः तत् प्रेक्ष्य मुहूर्तकं प्रकृतिगम्भीरोऽपि पर्युत्सुकमनाआसीत्।)

**सूचकः**–तोशिदे दाणिं भस्टा लाउत्तेण। (तोषितः इदानीं भर्ता ईश्वरेणः।)

**जानुकः**–णं भणामि इमश्श मश्चलीशत्तुणो किदे त्ति। (ननु भणाम्यस्य मत्स्यशत्रोः कृते इति।) (इति धीवरमसूयया पश्यति)

---

उत्तिष्ठ, एष भर्त्राङ्गुरीयक-मूल्य-सम्मितस्तुलितः पारितोषिकस्ते प्रसादीकृतस्तद् गृहाणैतत्। अनुगृहीतोऽस्मि। एष खलु राज्ञा तथानुगृहीतः यच्छूलादवतार्य्य हस्तिस्कन्धं समारोपितः। ईश्वरः–पारितोषिकः कथयति महार्हरत्नेन तेनाङ्गुरीयकेन स्वामिनो बहुमतेन भवितव्यमिति। ननु तस्मिन् भर्तुर्महार्हरत्नमिति न परितोषितः। एतावत् पुनस्तर्कयामि तस्य दर्शनेन कोऽपि हृदयेन्तो(यस्थो) जनो भर्त्रा स्मृत इति।

यथा मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत्।। तोषित इदानीं भर्त्रा ईश्वरेण। ननु भणाम्यस्य मत्स्यशत्रोः कृते। एतत् प्रयोजनार्थमेव भर्त्रा राजसन्तोषः कृत इति भावः।

**धीवरकः**–भस्टका, इदो अद्धं तुस्माणं पि शुलामुल्लं भोदु। (भर्तारौ, इतः अर्धं युष्माकमपि सुरामूल्यं भवतु।)

**जानुकः**–धीवल, महत्तले शंपदं मे पिअवअश्शके शंवुत्ते शि। कादम्बलीशद्धिके क्खु पढमं अस्माणं शोहिदे इश्शीअदि। ता शुण्डकागालं येव गश्चस्म। (धीवर, महत्तरं साम्प्रतं मे प्रियवयस्यः संवृत्तोऽसि। कादम्बरीसग्धिके खलु प्रथममस्माकं सौहित्यम् इष्यते। तत् शौण्डिकागारमेव गच्छामः।)

(इति निष्क्रान्ताः सर्वे)

(प्रवेशकः)

(ततः प्रविशत्याकाशयानेन मिश्रकेशी)

**मिश्रकेशी**–णिव्वत्तिदं मए पज्जाअणिव्वत्तणीअं अच्छरातित्थसंणिज्झं। ता जाव इमस्स राएसिणो वुत्तन्तं पच्चक्खीकरइस्सं। मेणआसंबन्धेण सरीरभूदा मे सउन्तला। ताए वि सन्दिट्ठ म्हि। (समन्तादवलोक्य) किं णु क्खु उवत्थिदक्खणे वि दिअसे णिरूसवारम्भं विअ राअउलं दीसदि। अत्थि मे विहवो पणिधाणेण सव्वं जाणिदुं। किं तु सहीए आदरो मए माणइदव्वो। भोदु। इमाणं जेव उज्जाणवालिआणं पासपरिवत्तिणी भविअ तिरक्करिणीए पच्छण्णा उवलहिस्सं। (निर्वर्तितं मया पर्यायनिर्वर्तनीयम् अप्सरस्तीर्थसान्निध्यम्। तद्यावदस्य राजर्षेः वृत्तान्तं प्रत्यक्षीकरिष्यामि। मेनकासम्बन्धेन शरीरभूता मे शकुन्तला। तयापि सन्दिष्टास्मि। किन्नु खल्वुपस्थितक्षणेऽपि दिवसे निरुत्सवारम्भमिव राजकुलं दृश्यते। अस्ति मे विभवः प्रणिधानेन सर्वं ज्ञातुम्। किं तु सख्याः आदरः मया मानयितव्यः। भवतु। आसामेव उद्यानपालिकानां पार्श्वपरिवर्तिनी भूत्वा तिरस्करिण्या प्रच्छन्ना उपलप्स्ये।)

(इति नाट्येनावतीर्य स्थिता)

---

भट्टार, इतोऽर्द्धं युष्माकमपि सूरामूल्यं भवतु। निःसादरादाह। धीवर–महत्तर साम्प्रतं प्रियवयस्यो मम संवृतोऽसि, कादम्बरीसन्धिकायां खलु प्रथममस्माकं सौहित्यमिष्यते।। सानुः स्त्रीमहतो जनं। सौहित्यं तर्पणं तृप्तिरिति चामरः। कादम्बरी स्वस्ति रे मदि[रा]भेदौ। "प्रथमशोभिते अस्माकमीप्सिते" इत्यन्यो विवृणोति। तच्छौण्डिकागारमेव गच्छामः।।

मिश्रकेशी अप्सरभेदः। निवर्तितः मया पर्य्यायनिवर्तनीयम् अप्सरस्तीर्थसान्निध्यं, तत्तावदेतस्य राजर्षेर्वृत्तान्तं प्रत्यक्षीकरिष्ये। मेनकासम्बन्धेन शरीरभूता मे शकुन्तला। तयापि सन्दिष्टास्मि नृपचरितज्ञानार्थमित्यर्थः। किं नु खलूपस्थितक्षणेऽपि दिवसे निरुत्सवारम्भमिव राजकुलं दृश्यते क्षणतत्परः। अस्ति मे विभवः प्रणिधानेन ज्ञातुं, किन्तु सख्या आदरो मया मानयितव्यः। प्रत्यक्षतो ज्ञानमेव तयोक्तमिति भावः। भवत्वासामेवोद्यानपालिकानां पार्व(र्श्व)परिवर्तनी भूत्वा तिरस्करिण्या प्रच्छन्ना उपलप्स्ये। तिरस्करिणी प्रच्छादिका विद्या।। अये उपस्थितो मधुमासः।।

(ततःप्रविशति चूताङ्कुरमवलोकयन्ती चेटी तस्याश्च पृष्ठतोऽपरा)

**प्रथमा**–

**आअम्बहरिअवेण्टं ऊससिअं विअ वसन्तमासस्स।**
**दिट्ठं चूअङ्कुरअं छणमङ्गलअं णिअच्छामि।।6–2।।**
**(आताम्रहरितवृन्तम् उच्छ्वसितमिव वसन्तमासस्य।**
**दृष्टं चूताङ्कुरं क्षणमङ्गलं पश्यामि।।)।।6–2।।**

**द्वितीया**–परहुदिए। किं एदं एक्काइणी मन्तेसि। (परभृतिके, किमेतत् एकाकिनी मन्त्रयसे)

**प्रथमा**–सहि महुरिए। चूदलदिअं पेक्खिअ उम्मत्तिआ खु परहुदिआ भोदि। (सखि मधुरिके, चूतलतिकाम् प्रेक्ष्य उन्मत्ता खलु परभृतिका भवति।)

**द्वितीया**–(सहर्षम्) कधं उवत्थिदो महुमासो। (कथमुपस्थितः मधुमासः।)

**प्रथमा**–महुरिए, तुहावि दाणिं एस कालो मदविब्भमुग्गीदाणं। (मधुरिके, तवापि इदानीमेषः कालः मदविभ्रमोद्गीतानाम्।)

**द्वितीया**–सहि, अवलम्बसु मं जाव अग्गपदे परिट्ठिदा भविअ इमिणा पसवेण सम्पादेमि कामदेवस्स वाअणं। (सखि, अवलम्बस्व मां यावदग्रपदोपरि स्थिता भूत्वा अनेन प्रसवेन सम्पादयामि कामदेवस्य वाचनम्।)

**प्रथमा**–जइ एवं ता ममावि अद्धं वाअणफलस्स। (यद्येवं तत् ममाप्यर्धं वाचनफलस्य।)

**द्वितीया**–सहि, अभणिदे वि एवं संपज्जदि ज्जेव जदो एक्कं जेव णो एदं सरीरं। (सख्याम् अवलम्बनं कृत्वा नाट्येन चूतप्रसवं गृहीत्वा) अम्हहे। अप्पबुद्धो वि चूदप्पसवो बन्धणभङ्गसुरही एस वाअदि। (कपोतहस्तं कृत्वा) णमो भअवदो मअरद्धअस्स। (सखि, अभणितेऽप्येवं संपद्यते एव यतः एकमेव नौ एतत् शरीरम्। अम्महे। अप्रबुद्धोऽपि चूतप्रसवः बन्धनभङ्गसुरभिः एषः वाति। नमः भगवते मकरध्वजाय।)

---

आता०।।(6-2) आताम्रहरितवृन्तं उच्छवसितमिव वसन्तमासस्य दृष्टश्चूताङ्कुरः क्षणमङ्गलं पश्यामि। जीवोच्छ्वसितमिति केचित्। तदा जीवः प्राणास्तेषाम् उच्छ्वसित उद्यमः चूताङ्कुरो दृष्टस्ततोऽस्य मङ्गलमपि भविष्यतीति भावः। नियच्छामीति दृशैः पुनरागच्छामि। अच्छा इति प्राकृतसूत्रात्, दृश-धातोर्निअच्छादेशः।

शङ्करस्तु वाह्ये(?) क्षणमङ्गलं नियच्छामीति पठित्वा, नियच्छामि ददामी(नी)त्याह। तद्विचार्य्यम्।। परभृतिके, किमिदमेकाकिनी मन्त्रयसे। सखि मधुरिके, चूतकलिकां चूताङ्कुरं वा प्रेक्ष्य उन्मत्तिका खलु परभृतिका भवति। कथमुपस्थितो मधुमासः।।

मधुरिके, तवाप्येष कालो मदविभ्रमोद्गीतानाम्। सखि, अवलम्बस्व मां यावदर्धपदोपरि स्थिता भूत्वा एतेन प्रसवेन सम्पादयामि। कामदेवस्य वाचनं, नैवेद्यम् अर्चनम् इत्यन्यः। यद्येवं

**अरिहसि मे चूअङ्कुर दिण्णो कामस्स गहिअचावस्स।**
**सच्चविअजुअइलक्खो पञ्चब्भहिओ सरो होउं।।6–3।।**
**(अर्हसि मे चूताङ्कुरदत्तः कामस्य गृहीतचापस्य।**
**सत्याकृतयुवतिलक्षः पञ्चाभ्यधिकः शरः भवितुम्)।।6–3।।**

(इति चूताङ्कुरं क्षिपति)

प्रविश्य **कञ्चुकी**–(सक्रोधम्) मा तावदनात्मज्ञे, देवेनैवं निषिद्धेऽपि मधूत्सवे चूतकलिका-भङ्गमारभसे।

**उभे**–(भीते) पसीददु पसीददु अज्जो। अगदित्थाओ अम्हे। (प्रसीदतु प्रसीदतु आर्यः। अगृहीतार्थे आवाम्।)

**कञ्चुकी**–हुम्। न खलु श्रुतं भवतीभ्यां तावद्वसन्तैस्तरुभिरपि प्रमाणीकृतं देवस्य शासनं तदाश्रयिभिश्च।

तथा हि–

**चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः**
**संनद्धं यदपि स्थितं कुरुबकं तत्कोरकावस्थया।**
**कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं**
**शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम्।।6–4।।**

---

तन्मयापि वाचनफलस्य। सखि, अभणितमपीदं सम्पद्यत इति यत एकमेवेदम् आवयोः शरीरं द्विधा विभक्तं प्रजापतिना। अम्महे विस्मये।

यः प्रबुद्धोऽपि चूतप्रसवो बन्धनभङ्गे सुरभिरेष वाति सुगन्धीभवति। कपो[तो] हल्त(स्त)भेदः। तदुक्तम् भरतेन सर्व्वपार्श्वसमाश्लेषात् कपोतः सर्व्वशीर्षकः। भीतो विज्ञानो भव विनये च प्रयुज्यते इति।। नमो भगवते मकरध्वजाय।

अरिह०।।(6-3)।।

अर्हसि मे चूताङ्कुरदत्तः कामस्य गृहीतचापस्य।
सत्याकृत युवतिलक्षः पञ्चाधिकः शरो भवितुम्।।

हे चूताङ्कुर! मया दत्तः त्वमर्थात् कामस्य षष्ठः शरो भवितुमर्हसि, सत्याकृतं निश्चितं युवतिरेव लक्षं(क्ष्यं) येन। संस्थापित युवतिरिति शाङ्करः पाठः। "आसीनपाठ्य" नामिकं लास्यमिदम्। यदाह भरतः।

द्रुतकरचरणविलासाभिनयैर्युक्तं प्रयुज्यते यच्च। आसीनया वनितया भवति तदासीनपाठ्यं त्विति।। देवेन राज्ञा। प्रसीदतु प्रसीदत्वार्य्यः। अगृहीतार्थे आवाम्, हूं क्रोधे।

चूता०।।(6-4)।। सन्नद्धं पुष्पितमुद्यतं तदपि कलिकावस्थया स्थितं, न विकासितमित्यर्थः। कुरबकं सोनाम्लानपुष्पं, अपिरेवार्थे स्खलितां न बहिर्भूतामित्यर्थः। चकितो भीतः धातुसन्धिवर्णनेऽयम्। नास्त्यत्र सन्देहः। महाप्रभावः खल्वेष राजर्षिः।

**मिश्रकेशी**–णत्थि एत्थ संदेहो। महप्पहावो क्खु एसो राएसी। (नास्त्यत्र सन्देहः। महाप्रभावः खल्वेषः राजर्षिः।)

**प्रथमा**–अज्ज, कदि चि दिअसा मित्तावसुणा रट्ठिएण भट्टिणो पादमूलं पेसिदाणं अम्हाणं इध पमदवणे चित्तकम्मं अप्पिदुं। अदो ण सुदपुव्वो अम्हेहिं एसो वुत्तन्तो। (आर्य, कतिचिद्दिवसाः मित्रावसुना राष्ट्रियेण भर्तुः पादमूलं प्रेषितयोः आवयोः इह प्रमदवने चित्रकर्म अर्पयितुम्। अतः न श्रुतपूर्वः आवाभ्यामेषः वृत्तान्तः।)

**कञ्चुकी**–तेन हि न पुनरेवं प्रवर्तितव्यम्।

**उभे**–कोदूहलं णो। जइ इमिणा जणेण सोदव्वं ता कधेदु अज्जो किं णिमित्तं भट्टिणा वसन्तूसवो णिसिद्धो। (कौतूहलं नौ। यद्यनेन जनेन श्रोतव्यं तत्कथयत्वार्यः किन्निमित्तं भर्त्रा वसन्तोत्सवः निषिद्धः।)

**मिश्रकेशी**–ऊसवप्पिआ राआणो होन्ति। ता गुरुणा कारणेण एत्थ होदव्वं। (उत्सवप्रिया राजानः भवन्ति। तत् गुरुणा कारणेन अत्र भवितव्यम्।)

**कञ्चुकी**–(स्वगतम्) बहुलीभूतोऽयमर्थः किं न कथ्यते। (प्रकाशम्) अस्ति भवत्योः कर्णपथमागतं शकुन्तलाप्रत्यादेशकौलीनम्।

**उभे**–अज्ज, सुदं रट्ठिअमुहादो अङ्गुलीअअदंसणं जाव। (आर्य, श्रुतं राष्ट्रियमुखाद् अङ्गुरीयकदर्शनं यावत्।)

**कञ्चुकी**–तेन हि स्वल्पं कथयितव्यम्। यदैवाङ्गुरीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा रहसि मया तत्रभवती शकुन्तला मोहात्प्रत्यादिष्टेति तदैव पश्चात्तापमनुगतो देवः।

**रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते**
**शय्योपान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः।**
**दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा**
**गोत्रेषु स्खलितस्तदा च भवति व्रीडाविलक्षश्चिरम्।। 6–5।।**

---

आर्य कतिचिद्दिवसान्(नि)? ......... मित्रावसुना राष्ट्रियेण भर्तुः पादमूलं प्रेषितयोरावयोरिह प्रमदवने चित्रकर्म अर्पयितुम्। राजश्यालस्तु राष्ट्रिय इत्यमरः। स(श)ङ्करस्तु कतिचिद्दिवसान् प्रेषिताभ्याम् आवाभ्यामिह वने चित्रकर्म्मसम्पादयितुमिति पठति। अतो न श्रुतपूर्व एष वृत्तान्त आवाभ्याम्।। आर्य्य, कौतूहलमावयोरद्य तेन जनेन न श्रोतव्यं यद्यावयोः श्रोतुमर्हतीत्यर्थः। तत् कथयत्वार्य्यः, किं निमित्तं भर्त्रा वसन्तोत्सवो निषिद्धः। ननूत्सवप्रिया राजानो भवन्ति। तद्गुरुणां(णा) कारणेनात्र भवितव्यम्। बहुलीकृतं प्रसिद्धं शकुन्तलानिराकरणरूपं कौलीनं परीवादः। श्रुतं राष्ट्रियमुखादङ्गुरीयदर्शनं यावत्। मोहादज्ञानात्।

रम्यं०।। (6-5) पद्मादिदर्शने दुःखलोभात् यथा पुरा सेवित इत्यर्थः। प्रकृतिभिः सचिवैः। दक्षिणो नायकभेदः, तद्भावो दाक्षिण्यम्। तदुक्तम्–यो गौरवं भयं प्रेम सम्भाव-पूर्व्वयोरिति। न

**मिश्रकेशी**–पिअं मे पिअं। (प्रियं मे प्रियम्।)

**कञ्चुकी**–अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

**उभे**–जुज्जदि। (युज्यते।)

(नेपथ्ये) एदु एदु भवं। (एत्वेतु भवान्।)

**कञ्चुकी**–(कर्णं दत्त्वा) अये। इत एवाभिवर्तते देवः। तद्गच्छतम्। स्वकर्मानुष्ठीयताम्।

(इत्युभे निष्क्रान्ते)

(ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च।)

**कञ्चुकी**–(राजानं विलोक्य) अहो, सर्वास्ववस्थासु रामणीयकमाकृतिविशेषाणाम्। तथा ह्येवं वैमनस्यपरीतोऽपि प्रियदर्शनो देवः। य एषः–

**प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं**
**बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः।**
**चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मन :**
**संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते।। 6-6।।**

**मिश्रकेशी**–(राजानमवलोक्य) ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स कारणादो सउन्तला किलम्मदि। (स्थाने खलु प्रत्यादेशविमानिताप्यस्य कारणात् शकुन्तला क्लाम्यति।

**राजा**–(ध्यानमन्दं परिक्रम्य)

**प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम्।**
**अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम्।। 6–7।।**

**मिश्रकेशी**–ईदिसाइं से तवस्सिणीए भाअधेआइं। (ईदृशान्यस्याः तपस्विन्याः भागधेयानि।)

**विदूषकः**–(स्वगतम्) भूओ वि लङ्घिदो एसो सउन्तलावादेण। ण आणे कधं चिकिच्छिदव्वो भविस्सदित्ति। (भूयोऽपि लङ्घितः एषः शकुन्तलावातेन। न जाने कथं चिकित्सितव्यः भविष्यतीति।)

---

मुञ्चत्यस्य चितोऽपि स ज्ञेयो दक्षिणो यथेति।। अन्तःपुरेभ्योऽन्तःपुरस्त्रीभ्यः गोत्रेषु नामसु व्रीडेति लज्जानिष्क्रियः। प्रियं मे प्रियं प्रभवतो जायमानात्। युज्यते। एतु एतु भवान्।

प्रत्या०।। (6-6) श्लथं कार्श्यम्। एकमद्वितीयं प्रशस्तं वा। श्वासेति। श्वासविरक्ताधरः प्रतान्तं क्षीणं प्रताम्रेति शङ्करः। संस्कारार्थं टङ्केन घृष्टः मणेरिव स्थानम्। खलु प्रत्यादेशविमानितापि एतस्मात् कारणाच्छकुन्तला का(क्ला)म्यति।।

प्रथ०।। (6-7) अवशयः पश्चात्तापः। सदृशानि तस्यास्तपस्विन्या भागधेयानि। हूं क्रोधे। भूयोऽपि लङ्घित एष शकुन्तलावातेन। न जाने कथं चिकित्सितव्यः प्रतिकर्तव्यो भविष्यति। अन्तःपुरोद्यानं प्रमदवनं, विनोदो विहारः। वेत्रवतीति प्रतिहारीनाम। अमात्ये ख्यातो। यद्दैव आज्ञापयति। पार्व्वतायन्ने(ने)ति कञ्चुकीसंज्ञा।

**कञ्चुकी**–(उपगम्य) जयति जयति महाराजः। प्रत्यवेक्षिताः प्रमदवनभूमयः। यथाकामम् अध्यास्तां विनोदस्थानानि देवः।

**राजा**–वेत्रवति, मद्वचनादमात्यपिशुनं ब्रूहि। अद्य चिरप्रबोधान्न संभावितमस्माभिर्धर्मासनम् अध्यासितुम्। यत्प्रत्यवेक्षितमार्येण पौरकार्यं तत्पत्रमारोप्य प्रस्थाप्यतामिति।

**प्रतीहारी**–जं देवो आणवेदि। (यद्देव आज्ञापयति।) (इति निष्क्रान्ता)

**राजा**–पार्वतायन, त्वमपि स्वनियोगमशून्यं कुरु।

**कञ्चुकी**–तथा। (इति निष्क्रान्तः)

**विदूषकः**–किदं भवदा णिम्मक्खिअं। संपदं सिसिरविच्छेदरमणीए इमस्सिं उज्जाणे अत्ताणअं विणोदेहि। (कृतं भवता निर्मक्षिकम्। साम्प्रतं शिशिरविच्छेदरमणीये अस्मिन् उद्याने आत्मानं विनोदय।)

**राजा**–(निःश्वस्य) वयस्य, रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तदव्यभिचारि। पश्य–

**मुनिसुताप्रणयस्मृतिरोधिना मम च मुक्तमिदं तमसा मनः।**
**मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः।।6–8।।**

अपि च–

**उपहितस्मृतिरङ्गुलिमुद्रया प्रियतमामनिमित्तनिराकृताम्।**
**अनुशयादनुरोदिमि चोत्सुकः सुरभिमाससुखं समुपस्थितम्।।6–9।।**

**विदूषकः**–भो वअस्स, चिठ दाव जाव इमिणा दण्डअट्ठेण कन्दप्पवाणं णासेमि। (भोः वयस्य, तिष्ठ तावद्यावदनेन दण्डकाष्ठेन कन्दर्पबाणं नाशयामि।)

(इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति।)

**राजा**–(सस्मितम्) भवतु, दृष्टं ब्रह्मवर्चसम्। सखे, कुत्रेदानीमुपविष्टः प्रियायाः किंचिद् अनुकारिणीषु लतासु दृष्टिं विनोदयामि।

---

कृतं भवता निर्मक्षिकम्। मक्षिकाया अप्यभावो निर्जनमित्यर्थः। शिशिरविच्छेदरमणीये एतस्मिन् प्रमदवने आत्मानं विनोदय। मुनि०।। (6-8) मुनिसुता शकुन्तला तमसा मोहेन युक्तं त्यक्तं। अन्यच्च [नाट्]यालंकारः। उप०।। (6-9) अङ्गुलीमुद्रया अङ्गुरीयकेण अनुलक्षीकृत्य सुरभिर्वसन्तः। अत्र रोदनमधिकमित्युक्तिपोषः। भो वयस्य, तिष्ठ तावदिति लोकोक्तिः। यावदेतेन दण्डकाष्ठेन कन्दर्पबाणान्नाशयामि।

ब्रा(ब्र)ह्मेति।। वेदाध्ययन-न(ज)न्योत्कर्षः।

**विदूषकः**–णं भवदा आसण्णपरिचारिआ लिविअरी मेधाविणी आदिट्ठा। माहवीलदाघरए इमं वेलं अदिवाहइस्सं तहिं च मे चित्तफलए सहत्थालिहिदं तत्थभोदीए सउन्तलाए पडिकिदिं आणेसु त्ति।

(ननु भवतासन्नपरिचारिका लिपिकरी मेधाविनी आदिष्टा। माधवीलतागृहके इमां वेलाम् अतिवाहयिष्यामि, तत्र च मे चित्रफलके स्वहस्तालिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानय इति।)

**राजा**–ईदृशमेव मे हृदयप्रत्याश्वासनम्। तत्तदेवादेशय माधवीलतागृहम्।

**विदूषकः**–इदो इदो एदु भवं। (इतो इतो एतु भवान्।)

(इति परिक्रामतः। मिश्रकेशी अनुगच्छति।)

**विदूषकः**–एस मणिसिलापट्टसणाधो माहवीलदामण्डवो विवित्तदाए णीसद्दसाअदेण विअ पडिच्छदि तुमं। ता पविसिअ उवविसम्ह।

(एषः मणिशिलापट्टसनाथः माधवीलतामण्डपः विविक्ततया निःशब्दस्वागतेनेव प्रतीच्छति त्वाम्। तत् प्रविश्योपविशावः।)

(उभौ तथा कुरुतः)

**मिश्रकेशी**–लदाए अन्तरिदा पेक्खिस्सं दाव पिअसहीपडिकिदिं। तदो से भत्तुणो अणुराअं बहुमदं णिवेदइस्सं।

(लतयान्तरिता प्रेक्षिष्ये तावत् प्रियसखीप्रतिकृतिम्। ततः अस्याः भर्तुः अनुरागं बहुमतं निवेदयिष्यामि।) (तथा स्थिता)

**राजा**–(निःश्वस्य) सखे, सर्वमिदानीं स्मरामि। शकुन्तलायाः प्रथमदर्शनवृत्तान्तं कथितवान् अस्मि भवते। स भवान्प्रत्याख्यानकाले मत्समीपगत एव नासीत्। प्रथममपि तत्रभवत्याः कीर्तितं नाम मया। कच्चिद् अहमिव विस्मृतवांस्त्वमपि।

**मिश्रकेशी**–अदो ज्जेव महीवदीहिं खणं पि सहिअआ सहाआ ण विरहिदव्वा। (अतः एव महीपतिभिः क्षणमपि सहृदयाः सहायाः न विरहितव्याः।)

---

ननु भवता प्रसन्न परिचारिका लिपिकरी मेधाविनी सन्दिष्टा। मेधाविनीति यथार्थ नाम। माधवीलतागृहे इमां वेलाम् अतिवाहरि(यि)ष्यामि।

अत्र मे चित्रफलके स्वहस्तलिखितं तत्रभवत्याः प्रतिकृतिमानयेति। इत इत एतु भवान्। एष मणिपट्टशिलासनाथो माधवीलतामण्डपो, विविक्ततया निःशब्द आगतेन पृच्छति, अनुतिष्ठतीव त्वाम्। तत् प्रविशामः।

लतयान्तरितां(ता) प्रेक्षिष्ये तावत् प्रियसख्याः प्रतिकृतिम्। ततोऽस्या भर्तुरनुरागं बहुमतं निवेदयिष्यामि। बहुमुखं बहुप्रकारमिति शाङ्करः पाठः। तथा लतान्तरितेत्यर्थः।। विस्मृत इति कर्तरि [क्तः]। अत एव महीपति[ना] क्षणमपि सहृदयाः सहाया न विवाहयितव्याः।

**विदूषकः**–भो। ण विसुमरामि। किं तु सव्वं कधिअ तए ज्जेव अवसाणे कधिदं। परिहासविअप्पो एसो ण भूदत्थो त्ति। मए मन्दबुद्धिणा तधा जेव गहिदं। अध वा भविदव्वदा एत्थ बलवदी। (भोः, न विस्मरामि। किं तु सर्वं कथयित्वा त्वयैवावसाने कथितं–परिहासविकल्पः एषः, न भूतार्थः इति। मया मन्दबुद्धिना तथैव गृहीतम्। अथवा भवितव्यतात्र बलवती।)

**मिश्रकेशी**–एवं णेदं। (एवं नु एतत्।)

**राजा**–(क्षणं ध्यात्वा) सखे, परित्रायस्व माम्।

**विदूषकः**–भो वअस्स, एदं किं उववण्णं तुह। ण कदा वि सप्पुरिसा सोअवत्तव्वा होन्ति। णं पवादे वि णिक्कम्पा जेव गिरीओ। (भोः वयस्य, एतद् किमुपपन्नं तव। न कदापि सत्पुरुषाः शोकवर्तव्याः भवन्ति। ननु प्रवाते अपि निष्कम्पा एव गिरयः।)

**राजा**–वयस्य, निराकरणविक्लवायास्ते सख्यास्तामवस्थामनुस्मृत्य बलवदशरणोऽस्मि। सा हि–

**इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता**
**स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।**
**पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती**
**मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम्।।6–10।।**

**मिश्रकेशी**–अम्हहे, इमस्स ईदिसी अकज्जपरदा संतावेदि। (अम्महे, अस्य ईदृशी अकार्यता संतापयति।)

**विदूषकः**–भो। अत्थि मे तक्को। केण वि तत्थभोदी आआससंचारिणा णीद त्ति। (भोः अस्ति मे तर्कः। केनापि तत्रभवत्याकाशसञ्चारिणा नीतेति।)

**राजा**–वयस्य, कः पतिव्रतां तामन्यः परामर्ष्टुमुत्सहते। मेनका किल सख्यास्ते जन्मप्रतिष्ठेति सखीजनादस्मि श्रुतवान्। तत्सहचरीभिस्तया वा नीतेति मे हृदयमाशङ्कते।

**मिश्रकेशी**–संमोहो क्खु विम्हअणीओ, ण उण पडिबोधो। (संमोहः खलु विस्मयनीयः, न पुनः प्रतिबोधः।)

---

भो न विस्मरामि, किन्तु सर्वं कथयित्वा त्वयैवावसाने कथितं यथा परिहासविकल्पितम् एतन्न भूतार्थमिति, मया मन्दबुद्धिना तथैव गृहीतम्। अथवा भवितव्यता अत्र बलवती। एवमेतत्।।

भो वयस्य, किमिदमुपपन्नं तव। [न] कदाचित् स[त्] पुरुषा(षाः) शोकपरवशा भवति(न्ति)। ननु प्रवातेऽपि निष्कम्पा एव गिरयः। अशरणः परित्राणशून्यः। शल्यं शरफलं। अम्महे विस्मये। एतस्येदृशी अकार्य्यपरतां सन्तापयति। अस्ति ते तर्कः ज्ञानं, केन अत्रभवती आकाशसञ्चारिणा नीतेति। परामर्षः अकर्तुः प्रष्टुर्वा। जन्मप्रतिष्ठा जन्मस्थानं। अ(स)म्मोहः खलु विस्मयनीयः, न पुनः प्रतिबोधः।

**विदूषकः**–भो। जइ एवं ता समस्ससदु भवं। अत्थि क्खु समागमो तत्थभोदीए। (भोः, यद्येवं तत् समाश्वसितु भवान्। अस्ति खलु समागमः तत्रभवत्याः।)

**राजा**–कथमिव।

**विदूषकः**–भो। ण हि मादा पिदा वा भत्तुविरहिदं चिरं दुहिदरं पेक्खिदुं पारेदि। (भोः, न हि माता पिता वा भर्तृविरहितां चिरं दुहितरं प्रेक्षितुं पारयति।)

**राजा**–वयस्य,

**स्वप्नो नु माया नु मतिभ्रमो नु**
**क्लृप्तं नु तावत्फलमेव पुण्यैः।**
**असंनिवृत्त्यै तदतीव मन्ये**
**मनोरथानामतटप्रपातम् ।।6–11।।**

**विदूषकः**–भो, मा एवं भण। णं अङ्गुरीअअं जेव एत्थ णिदंसणं अवस्संभाविणो अचिन्तणीया समागमा होन्ति त्ति। (भोः मैवं भण। नन्वङ्गुरीयकमेवात्र निदर्शनम्, अवश्यंभाविनः अचिन्तनीयास्समागमाः भवन्तीति।)

**राजा**–(अङ्गुरीयकमालोक्य) इदं तदसुलभस्थानभ्रंशि शोचनीयमङ्गुरीयकम्।

**तव सुचरितमङ्गुरीय नूनं प्रतनु ममेव विभाव्यते फलेन।**
**अरुणनखमनोहरासु तस्याश्च्युतमसि लब्धपदं यदङ्गुलीषु।।6-12।।**

---

भो यत्ये(द्ये)वं तत् समाश्वसितु भवान्। न हि मातापितरौ भर्तुर्विरहितां दुहितरं चिरं प्रेक्षितुं पारयतः।

स्वप्नो०।। (6-11) तत्तस्मान्मनोरथानामतटं प्रपातं मन्ये। प्रपातस्त्व टतो भृगुरित्यमरः। मम मनोरथोऽत्युत्कण्ठापिडीत इति भावः। असन्निवृत्तौ सत्यां अर्थात्तस्या न तु तद्दर्शनं स्वप्नो निद्रा नु। सर्व्वत्र नु वितर्के। दुष्टमनोजन्यस्थानं स्वप्नः।। माया इन्द्रजालादि...। (इतः परम् कोष्ठान्तर्गतोंऽशः शङ्करस्य टीकारूपेण मैथिलपुस्तके गृहीतः) [[माया इन्द्रजालादिक्रिया, तया तद्दर्शनं जातमतो न तत्समागमः[78]। मतिभ्रमो नु। भ्रान्तो हि असदपि साक्षात्करोति शुक्तिकायां रजत[व]त्। पुण्यैस्तावत् ....?... तत्फलं दर्शनमात्रफलं क्लृप्तम्[79]। दोषाय[80] संशयालङ्कार इति शङ्करः।। भो वयस्य, मैवं भण[81]। ननु अङ्गुरीयकमेवात्र निदर्शनम् प्रमाणम्। अवश्यंभाविनोऽचिन्तनीयाः समागमा भवन्तीति। तव०। हे अङ्गुरीय, सुचरितं पुण्यं यद्यन्यहस्तगतं तावत्तदा सत्यम्। असुलभं दुर्लभं यत् स्थानं तस्या एवाङ्गुलिरूपं, तस्मात् यो भ्रंशः स्खलनं, तेन शोचनीयम्.....*।

---

78. इतः परमेतदधिकम् पुस्तके। अत्रापि तर्क एव। उभयत्र स्वप्नेपि नानाकलितो दृश्यते। माया तु नानावलम्बनी भवतीत्युपपत्तिम् आह।

79. वाक्यमिदं "पुण्यैस्तावत् दर्शनमात्रफलं क्लृप्तम्" इति मैथिलपुस्तके।

80. इतः पूर्वमेतदधिकम् पुस्तके, नु ऊहो वितर्क इत्युक्तः पदार्थेषु यथामतीति। संशयालंकारः निश्चयेन तु वाक्यस्य समाप्तिः संशयो यथा।

81. इतः परमेतदधिकम् पुस्तके – एवं स्वप्नादिकम्। कुतस्तत्राह।

**मिश्रकेशी**–जइ अण्णहत्थगदं भवे तदा सच्चं सोअणीअं भवे। सहि, दूरे वट्टसि। एआइणी जेव कण्णसुहाइं अणुभवामि। (यद्यन्यहस्तगतं भवेत् तदा सत्यं शोचनीयं भवेत्। सखि, दूरे वर्तसे। एकाकिन्येव कर्णसुखान्यनुभवामि।)

**विदूषकः**–भो, इअं णाममुद्दा केण उण उवुग्घादेण भवदा तत्थभोदीए हत्थसंसग्गं पाविदा। (भोः इयं नाममुद्रा केन पुनः उपोद्धातेन भवता तत्रभवत्याः हस्तसंसर्गं प्रापिता।)

**मिश्रकेशी**–मम विअ कोदूहलेण आलाविदो एसो। (ममैव कौतूहलेनालापितः एषः।)

**राजा**–वयस्य, श्रूयताम्। यदा तपोवनात्स्वनगराय प्रस्थितं मां प्रिया सबाष्पमिदमाह कियच्चिरेणार्यपुत्रः पुनरस्माकं स्मरिष्यतीति।

**विदूषकः**–तदो तदो। (ततस्ततः।)

**राजा**–अथेमां नाममुद्रामङ्गुल्यां निवेशयता मया प्रत्यभिहिता।

**विदूषकः**–किं ति। (किमिति।)

**राजा**–

**एकैकमत्र　दिवसे　दिवसे　मदीयं**
**नामाक्षरं गणय यासि न यावदन्तम्।**
**तावत्प्रिये　मदवरोधनिदेशवर्ती**
**नेता　जनस्तव　समीपमुपैष्यतीति।। 6–13।।**

तच्च मोहाद् दारुणमनुष्ठितम्।

**मिश्रकेशी**–रमणीओ क्खु अवही विहिणा विसंवादिदो। (रमणीयः खल्ववधिः विधिना विसंवादितः।)

**विदूषकः**–अध कधं रोहिदमच्छस्स मुहं बडिसं विअ एदं पविट्ठं आसि। (अथ कथं रोहितमत्स्यस्य मुखं बडिशमिवैतत् प्रविष्टमासीत्।)

**राजा**–शचीतीर्थे सलिलं वन्दमानायास्तव सख्याः परिभ्रष्टम्।

**विदूषकः**–जुज्जदि। (युज्यते।)

---

......भवेत्। सखि, दूरे वर्तसे। एकाकिन्येव कर्णसुखान्यनुभवामि।

भो! इयं नाममुद्राङ्गुरीयकं केन पुनरुपोद्घातेनोपक्रमेण भवता तत्रभवत्या हस्तसंसर्गं प्रापिता। ममापि कौतुहलेनैव श्रवणोत्कण्ठयेव वादित एषः। पाठान्तरे व्यापारितः। कियच्चिरेण कियता कालेन। ततस्ततः। किमिति।

एकैकं (6-13)।। यासि यास्यसि। अन्तं नामाक्षरान्तरम्। मदवरोधेति (....) अन्तःपुरसेवकः नेता रसिकः।। रमणीयः खल्ववधिर्विधिना विसंवादितः। अथ कथं रोहितमत्स्यस्य बडिशमिव मुखं प्रविष्टमासीत्। युज्यते। एवमतः खलु तपस्विन्याः शकुन्तलायाः अधर्म-भीरोरमुष्य राजर्षेः परिणये

**मिश्रकेशी**–अदो क्खु तवस्सिणीए सउन्तलाए अधम्मभीरुणो राएसिणो परिणए सन्देहो। अधवा ण ईदिसो अणुराओ अहिण्णाणं अवेक्खदि। ता कधं विअ एदं। (अतः खलु तपस्विन्याः शकुन्तलायाः अधर्मभीरोः राजर्षेः परिणये सन्देहः। अथवा न ईदृशः अनुरागः अभिज्ञानमपेक्षते। तद् कथमिवैतद्।)

**राजा**–भवतु, उपालप्स्ये तावदिदमङ्गुरीयकम्।

**विदूषकः**–(सस्मितम्) अहं पि एदं दण्डअट्ठं उवालहिस्सं। कधं उज्जुअस्स मे कुडिलं तुमं सि त्ति। (अहमपि एतद्दण्डकाष्ठमुपालप्स्ये। कथम् ऋजोः मे कुटिलम् त्वमसीति।)

**राजा**–(अनाकर्णितनाटितकेन)

**कथं नु तं कोमलबन्धुराङ्गुलिं**
**करं विहायासि निमग्नमम्भसि।**

अथवा–

**अचेतनं नाम गुणं न वीक्षते**
**मयैव कस्मादवधीरिता प्रिया।। 6–14।।**

**मिश्रकेशी**–सअं जेव पडिवण्णो जं म्हि वत्तुकामा। (स्वयमेव प्रतिपन्नः यदस्मि वक्तुकामा।)

**विदूषकः**–भो, सव्वधा अहं खु बुभुक्खाए मारिदव्वा। (भोः सर्वथा अहं खलु बुभुक्षया मारयितव्यः।)

**राजा**–(अनादृत्य) प्रिये, अकारणपरित्यागानुशयदग्धहृदयस्तावद् अनुकम्प्यतामयं जनः पुनर्दर्शनेन।

प्रविश्य चित्रफलकहस्ता **चेटी**–भट्टा, इअं चित्तगदा भट्टिणी। (भर्तः, इयं चित्रगता भर्त्री।)

(इति चित्रफलकं दर्शयति)

**राजा**–(विलोक्य) अहो रूपमालेख्यस्य। तथा हि–

**दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं**
**दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाभिषिक्ताधरम्।**

---

संदेहः। अथवा नेदृशोऽ नुरागोऽभिज्ञानम् अपेक्षते। तत्कथमप्येतत्।। अहमपीदं दण्डकाष्ठमुपालप्स्ये। कथं किं ऋजुकस्य मे कुटिलमसि त्वम्।

बन्धू०।। (6-14)।। बन्धुरं रम्यम्। निमग्नमम्भसि आसीरित्यर्थः। नाम संभावनायाम्। मयैव चेतनेनैवेत्यर्थः। स्वयमेव प्रतिपन्नः यदहं वक्तुकामास्मि। रसान्तरकरणाय हेतोः–सर्वथाहं बुभुक्षया मारयितव्यः। अयम् अस्मद्रूपः। चित्रफलकं चित्रलेखपटी। भट्टारक इयं चित्रगता भट्टिनी शकुन्तला। भट्टिनी द्विजभार्यायां नाट्योक्तौ राजयोषितीति विश्वः।

**कर्कन्धूद्युतिपाटलोष्ठरुचिरं　　तस्यास्तदेतन्मुखं**
**चित्रेऽप्यालपतीव　　विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम्।। 6–15।।**

[तथा हि–

**अस्यास्तुङ्गमिव स्तनद्वयमिदं, निम्नेव नाभिः स्थिता**
**दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि।**
**अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावाच्चिरं**
**प्रेम्णा मन्मुखमीषदीक्षत इव स्मेरा च वक्तीव माम्।। 6–16।।]**[82]

**विदूषकः**–(विलोक्य) भो, भावमहुरा रेहा। खलदि विअ मे दिट्ठी णिण्णुण्णदप्पदेसेसुं। किं बहुणा। सत्ताणुप्पवेससङ्काए आलवणकोदूहलं मे जणेदि। (भोः भावमधुरा रेखा। स्खलति इव मे दृष्टिः निम्नोन्नतप्रदेशेषु। किं बहुना। सत्त्वानुप्रवेशशङ्कया आलपनकौतूहलं मे जनयति।)

**मिश्रकेशी**–अहो राएसिणो वत्तिआरेहाणिउणदा। जाणे पिअसही मे अग्गदो वट्टदि त्ति। (अहो राजर्षेः वर्तिकारेखानिपुणता। जाने प्रियसखी मे अग्रतः वर्तते इति।)

**राजा**–वयस्य,

**यद्यत्साधु न चित्रेऽस्मिन्क्रियते तत्तदन्यथा।**
**तथापि तस्या लावण्यं रेखया किंचिद् अन्वितम्।। 6–17।।**

**मिश्रकेशी**–सरिसं पच्छादावगुरुणो सिणेहस्स। (सदृशं पश्चात्तापगुरोः स्नेहस्य।)

**राजा**–(निःश्वस्य)

**साक्षात्प्रियामुपगतामपहाय　　पूर्वं**
**चित्रार्पितामहमिमां　बहु　मन्यमानः।**
**स्रोतोवहां　पथि　निकामजलामतीत्य**
**जातः　सखे　प्रणयवान्मृगतृष्णिकायाम्।। 6–18।।**

---

दीर्घेति०।। (6-15)। लीला शृङ्गारचेष्टा। अञ्चितं चञ्चलं पूजितं वा। कर्कन्धूः पक्व-कर्कन्धूरित्यमरः। तत्रैव पाटलता संगच्छते। रुचिरं सुन्दरं ओष्ठाभ्यां रुचिरं कान्तिजनकमिति शाङ्करः पाठः। आलपतीव मामर्थात्। विभ्रमो विलासः।। तस्याः०।। (6-16) तुङ्गमिव रेखानिपुणतया तथा भानात्। एवमग्रेपि। पद्यमिदमनतिमधुरं दाक्षिणात्य-पुस्तकेष्वेव दृश्यते।। भो भावमधुरा रेखा। भावोऽभिप्रायः। स्खलतीव मे दृष्टिर्निम्नोन्नत-प्रदेशेषु। आलिखितप्रदेशे इति च पाठः। किं बहुना, सत्त्वानुप्रवेश-शङ्कयालपनकौतुकं मे जनयति। अहो राजर्षेर्वत्तिकारेखानिपुणता। जाने प्रियसखी मेऽग्रतो वर्तत इति। यद्यदिति०।। (6-17)।।–अन्यथा क्रियते यद्यपीत्यर्थः। लावण्यं सौन्दर्यम्।। सदृशं पश्चात्तापगुरोः स्नेहस्य।

साक्षादिति०।। (6-18)–स्रोतोवहां नदीम्। मृगतृष्णा मरीचिका। निदर्शनालङ्कारः।।

---

82. अंशोऽयं रिचार्ड पिशेलेन सम्पादिते बंगदेशीयपाठे न स्वीकृतः।

**विदूषकः**–तिण्णि आइदीओ दीसन्ति। सव्वाओ ज्जेव दंसणीआओ। ता कदमा तत्थभोदी सउन्तला। (तिस्रः आकृतयः दृश्यन्ते। सर्वैव दर्शनीयाः। तत् कतमा तत्रभवती शकुन्तला।)

**मिश्रकेशी**–अणहिण्णो एस तवस्सी सहीए रूवस्स। मोहचक्खुणो इअं ण गदा से पच्चक्खदं। (अनभिज्ञः एषः तपस्वी सख्याः रूपस्य। मोघचक्षुषः इयं न गतास्य प्रत्यक्षताम्।)

**राजा**–त्वं तावत्कतमां तर्कयसि।

**विदूषकः**–(निर्वर्ण्य) तक्केमि जा एसा अवसेअसिणिद्धपल्लवं असोअलदिअं संसिदा सिढिलकेसबन्धुव्वम्मन्तकुसुमेण बद्धसेदबिन्दुणा वअणेण विसेसणमिदसाहाहिं बाहालदिआहिं ऊससिदणीविणा वसणेण ईसिपरिस्सन्ता विअ आलिहिदा सा तत्थभोदी सउन्तला सेसाओ सहीओ त्ति। (तर्कयामि या एषा अवसेकस्निग्धपल्लवाम् अशोकलतिकां संश्रिता शिथिलकेशबन्धोद्वमत्कुसुमेन बद्धस्वेदबिन्दुना वदनेन विशेषनमितशाखाभ्यां बाहुलतिकाभ्याम् उच्छ्वसितनीविना वसनेन ईषत्परिश्रान्तेवालिखिता सा तत्रभवती शकुन्तला, शेषे सख्यौ इति।)

**राजा**–निपुणो भवान्। अस्त्यत्र ममापि भावचिह्नम्।

**स्विन्नाङ्गुलीनिवेशाद्रेखा प्रान्तेषु दृश्यते मलिना।**
**अश्रु च कपोलपतितं लक्ष्यमिदं वर्णकोच्छ्वासात्।।6–19।।**

चतुरिके, अर्धलिखितमेतद्विनोदस्थानमस्माभिः। तद्गच्छ। वर्तिकास्तावद् आनय।

**चेटी**–अज्ज माधव्व। अवलम्बसु चित्तफलअं जाव गच्छामि। (आर्य माधव्य, अवलम्बस्व चित्रफलकं यावत् गच्छामि।)

**राजा**–अहमेवैनमवलम्बे। (इति यथोक्तं करोति, चेटी निष्क्रान्ता)

**विदूषकः**–भो। किं एत्थ अवरं आलिहिदव्वं। (भोः किमत्रापरमालिखितव्यम्।)

---

भोस्तिस्र आकृतयो दृश्यन्ते। सर्वा एव दर्शनीयाः। तत्कतमा तत्रभवती शकुन्तला। अनभिज्ञ एव तपस्वी सख्या रूपस्य। मोघचक्षुषोऽस्य इयं न गता प्रत्यक्षताम्। मोघत्वं शकुन्तलारूपादर्शनात्। निर्वर्ण्य दृष्ट्वा, तर्कयामि यैषा शिथिलकेशोद्वमत्कुसुमेन बद्धस्वेदबिन्दुना वदनेन विशेष-नमितं शाखाभ्यां बाहुलतिकाभ्यां उच्छवसित-नीविना वसनेनावसेकस्निग्धपल्लवामशोकलतिकां संश्रिता ईषत् परिश्रान्तेवालिखिता सा तत्रभवती, शेषे सख्याविति।

स्विन्नेति०।।(6-19) प्रान्तभागे मलिना रेखा दृश्यते। अश्रु सात्त्विकम्। वर्णको हरितालादिः। उच्छवास उन्नत-तनुम्[83]।। आर्य माधव्य अवलम्बस्व चित्रफलकं यावद् गच्छामि। भोः किमत्रापरमभिलिखितव्यम्। यो यः प्रियसख्या अभिमतप्रदेशस्तमालिखितुकाम इति तर्कयामि।

---

83. मैथिलीयपाठे (पुस्तके) – उन्नतत्वम्।

**मिश्रकेशी**–जो जो पिअसहीए अहिमदो पदेसो तं तं आलिहिदुकामो त्ति तक्केमि। (यः यः प्रियसख्याः अभिमतः प्रदेशः तं तमालिखितुकाम इति तर्कयामि।)

**राजा**–सखे, श्रूयताम्।

**कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी**
**पादस्तामभितो निषण्णचमरो गौरीगुरोः पावनः।**
**शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः**
**शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्।। 6–20।।**

**विदूषकः**–(अपवार्य) जधा मन्तेदि तधा तक्केमि पूरिदो अणेण चित्तफलओ आइदीहिं कुच्चाणदाणं तावसाणं ति। (यथा मन्त्रयते तथा तर्कयामि पूरितः अनेन चित्रफलकः आकृतिभिः कूर्चानतानां तापसानाम् इति।)

**राजा**–अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतमत्रालिखितुं विस्मृतमस्माभिः।

**विदूषकः**–किं विअ। (किमिव।)

**मिश्रकेशी**–वणवासस्स कण्णआभावस्स च सरसिं भविस्सदि। (वनवासस्य कन्यकाभावस्य च सदृशं भविष्यति।)

**राजा**–

**कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेसरम्।**
**न वा शरश्चन्द्रमरीचिकोमलं मृणालसूत्रं रचितं स्तनान्तरे।।6–21।।**

**विदूषकः**–किं णु क्खु तत्थभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं ओवारिअ चकिदचकिदा विअ ट्ठिदा। (दृष्ट्वा) आं एसो दासीएपुत्तो कुसुमरसपाडच्चरो धिट्ठमहुअरो तत्थभोदीए वअणकमलं अहिलसदि। (किन्नु खलु तत्रभवती रक्तकुवलयशोभिना अग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता। आम्। एषः दास्याःपुत्र कुसुमरस–पाटच्चरः धृष्टमधुकरः तत्रभवत्याः वदनकमलमभिलषति।)

---

कार्येति०।।(6–20)–सैकतं वालुकातटम्। पादः प्रत्यन्तपर्वतः कार्य इत्यनुषङ्गः। तामभितः मालिनीसमीपे गौरीगुरोर्हिमालयस्य। कृष्णमृगस्य[84] कृष्णसारस्य।। यथा मन्त्रयति तथा तर्कयामि। पूरितोऽनेनेति चित्रफलक आकृतिभिः कूर्चानतानां तापसानाम्। कूर्चः श्मश्रुः। कूर्चो विकत्थने मध्ये भ्रुवोः श्मश्रुणि केतव इति विश्वः। किमिव, इव शब्दो वाक्यालङ्कारे। वनवासस्य कन्यकाभावस्य च सदृशं भविष्यति।

कृतमिति०।। (6–21)।। बन्धनं वृन्तम्। कोमलं रम्यम्।। किं न खलु तत्रभवती रक्तकुवलयशोभिनाग्रहस्तेन मुखमपवार्य चकितेव स्थिता।

---

84. मैथिलीयपाठे (पुस्तके) शब्दोऽयमस्ति।

**राजा**–ननु वार्यतामेष धृष्टः।

**विदूषकः**–तुमं जेव अविणीदसासणे पहवसि। (त्वमेवाविनीतशासने प्रभवसि।)

**राजा**–युज्यते। अयि भोः कुसुमलताप्रियातिथे। किमितः परिपतनखेदमनुभवसि।

**एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता।**
**प्रतिपालयति भ्रमरी न खलु मधु त्वां विना पिबति।।6–22।।**

**मिश्रकेशी**–अहिजादं खु वारिदो। (अभिजातं खलु वारितः।)

**विदूषकः**–पडिसिद्धवामा खु एसा जादी। (प्रतिषिद्धवामा खल्वेषा जातिः।)

**राजा**–(सकोपम्) भोः। न मे शासने तिष्ठसि। श्रूयतां तर्हि संप्रति–

**अक्लिष्टबालतरुपल्लवलोभनीयं**
**पीतं मया सदयमेव रतोत्सवेषु।**
**बिम्बाधरं दशसि चेद् भ्रमर प्रियाया-**
**स्त्वां कारयामि कमलोदरबन्धनस्थम्।।6–23।।**

**विदूषकः**–भो। एवं तिक्खदण्डस्स दे कधं ण भाइस्सदि। (प्रहस्यात्मगतम्) एसो दाव उम्मत्तओ अहं पि एदस्स सङ्गेण ईदिसो ज्जेव संवुत्तो। (भोः एवं तीक्ष्णदण्डस्य ते कथं न भेष्यति। एषः तावदुन्मत्तोऽहमप्येतस्य सङ्गेन ईदृशः एव संवृत्तः।)

**राजा**–कथं निवार्यमाणोऽपि स्थित एव।

**मिश्रकेशी**–धीरं पि जणं रसो विआरेदि। (धीरमपि जनं रसः विकारयति।)

**विदूषकः**–(प्रकाशम्) भो चित्तं खु एदं। (भोः चित्रं खल्वेतत्।)

---

ही ही भो हास्योक्तौ। एष दास्याः पुत्रः कुसुमरसपाटच्चरो मधुकरोऽत्रभवत्या वदनकमल-मभिलषति। पाटच्चरश्चौरः। त्वमेवाविनीतशासने प्रभवसि।।

एषेति०।। (6-22)।। अथ च चन्द्रमरीचिप्राया(?) शकुन्तलेति सूच्यत इति शङ्करः।। अभिजातमुचितं खलु वारितः। खल्वस्य व्याहतमिति वा पाठान्तरे। प्रतिषिद्धवामा खल्वेषा जातिः।।

लोभनीयं०।।(6-23)।। रम्यम्। बिम्बेति मध्यमपदलोपी समासः।। भो एवं तीक्ष्णदण्डस्य ते कथं न भेष्यति। प्रहस्य हसित्वा। तदुक्तम् "सावष्टम्भं साश्रुनेत्रं विक्रुष्टस्वरसंयुतम्। करोपगूढपार्श्वं च उच्चप्रहसितं[85] भवेदिति"।। एष तावदुन्मत्तः। अहमप्येतस्य सङ्गेन ईदृश एव संवृत्तः। धीरमपि जनं रसो विप्रलम्भः व्याकुलयति। असंबद्धमधम् आलापादित्यर्थः। भोश्चित्रं खल्वेतत्। अहम् अपीदानीम् एव गृहीतार्थः(र्था), किं पुन–र्यथाचिन्तितानुभावी एषः।

दर्शन०।।(6-24)।।तन्मयेन शकुन्तलामयेन।इयं पञ्चमी कामावस्था।तदुक्तं–पञ्चमे तन्मयत्वं

---

85. मैथिलीयपाठे (पुस्तके) – तत्प्रहासं।

**राजा**–कथं चित्रम्।

**मिश्रकेशी**–अहं पि दाणिं जेव अवगदत्था, किं उण जधाचिन्तिदाणुभावी एसो। (अहमप्यदानीमेवावगतार्था, किं पुनः यथाचिन्तितानुभावी एषः।)

**राजा**–किमिदमनुष्ठितं पौरोभाग्यम्।

**दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन।**
**स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता।। 6–24।।**

(इति बाष्पं विसृजति)

**मिश्रकेशी**–अम्मो, पुव्वावरविरुद्धो एसो विहिणो मग्गो। (अम्भो, पूर्वापरविरूद्धः एषः विधेः मार्गः।)

**राजा**–वयस्य, कथमविश्रामं दुःखमनुभवामि।

**प्रजागरात्खिलीभूतस्तस्याः स्वप्नसमागमः।**
**बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि।। 6–25।।**

**मिश्रकेशी**–सव्वधा वअस्स संमज्जिदं तए पच्चादेसदुक्खं पिअसहीए सउन्तलाए पच्चक्खं जेव सहीअणस्स। (सर्वथा वयस्य संमार्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः शकुन्तलायाः प्रत्यक्षमेव सखीजनस्य।)

प्रविश्य **चतुरिका**–भट्टा, वत्तिआकरण्डअं गेण्हिअ इदो अहं पत्थिद म्हि। (भर्तः, वर्तिकाकरण्डकं गृहीत्वा इतः अहं प्रस्थितास्मि।)

**राजा**–किं ततः।

**चेटी**–सो मे पिङ्गलिआदुदिआए देवीए वसुमदीए अहं जेव अज्जउत्तस्स उवणइस्सं ति भणिअ सबलक्कारं गहिदो। (सः मे पिङ्गलिकाद्वितीयया देव्या वसुमत्या अहम् एवार्यपुत्रस्य उपनेष्यामिति भणित्वा सबलात्कारं गृहीतः।)

**विदूषकः**–तुमं कधं विमुक्का। (त्वं कथं विमुक्ता।)

**चेटी**–जाव लदाविडवलग्गं देवीए परिचारिआ अञ्चलं मोआवेदी ताव णिण्हुविदो मए अप्पा।

---

चेति।। अम्मो विस्मये। पूर्वापरविरुद्ध एष विधेर्मार्गः।। प्रजागरादिति०।। (6–25)।। खिलीभूतो दुर्लभः।।

सर्वथा वयस्य मार्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः शकुन्तलायाः प्रत्यक्षेन स सखीजनस्य, न ममेत्यर्थात्।। भट्टारक वर्तिका–करण्डिकां गृहीत्वा इतोऽहं प्रस्थितास्मि। करण्डिका पुष्पाद्याहार–पात्रविषेषः। सा च पिङ्गलिका–द्वितीयया देव्या वसुमत्या अहमेवार्यपुत्रस्योपनेष्यामीति भणित्वा सबलात्कारं गृहीता सा करण्डिका।। पिङ्गलिका सखी। वसुमती देवी नाम। त्वं कथं विमुक्ता।

(यावत् लताविटपलग्नं देव्याः परिचारिका अञ्चलं मोचयति तावत् निह्नुतः मया आत्मा।)

(नेपथ्ये) एदु एदु भट्टिणी। (एत्वेतु भर्त्री।)

**विदूषकः**–(कर्णं दत्त्वा) भो अहिधावन्ती एसा अन्तेउरवग्घी मेधाविणिं मइं विअ कवलिदुं उवत्थिदा। (भोः अभिधावन्ती एषा अन्तःपुरव्याघ्री मेधाविनीं मृगीमिव कवलयितुमुपस्थिता।)

**राजा**–वयस्य, उपस्थिता देवी बहुमानगर्विता। तद्भवानिमां प्रतिकृतिं रक्षतु।

**विदूषकः**–अत्ताणअं पि किं ति ण भणसि। (चित्रफलकमादाय उत्थाय च) जइ भवं अन्तेउरवाउरादो मुच्चिस्सदि तदो मं मेहच्छण्णप्पासादे सद्दावेसि। एदं च तहिं गोवेमि जहिं पारावदं उज्झिअ ण को वि अण्णो पेक्खदि। (आत्मानमपि किं न भणसि। यदि भवानन्तःपुरवागुरातः मोक्ष्यते ततः मां मेघछन्नप्रासादे शब्दयसि। एतत् च तत्र गोपयामि यत्र पारावतमुज्झित्वा न कोऽप्यन्यः प्रेक्षते।)

(इति द्रुतपदं निष्क्रान्तः)

**मिश्रकेशी**–अम्मो, अण्णसंकन्तहिअओ वि पढमसंभावणं रक्खदि। थिरसोहिदो दाव एसो। (अम्मो अन्यसंक्रान्तहृदयः अपि प्रथमसम्भावनाम् रक्षति। स्थिरसौहृदः तावदेषः।)

प्रविश्य पत्रहस्ता **प्रतीहारी**–जअदु जअदु देवो। (जयतु जयतु देवः।)

**राजा**–वेत्रवति, न खल्वन्तरे दृष्टा त्वया देवी वसुमती।

**प्रतीहारी**–देव, दिट्ठा पत्तहत्थं मं पेक्खिअ पडिणिउत्ता। (देव, दृष्टा, पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता।)

**राजा**–कालज्ञा देवी कार्योपरोधं मे परिहरति।

**प्रतीहारी**–देव, अमच्चो विण्णवेदि। अत्थजादस्स बहुलदाए एक्कं मए पोरकज्जं पच्चवेक्खिदं। तं देवो पत्तारोविदं पच्चक्खीकरेदु त्ति। (देव, अमात्यः विज्ञापयति। अर्थजातस्य बहुलतया एकं मया पौरकार्यं प्रत्यवेक्षितम्। तद्देवः पत्रारोपितं प्रत्यक्षीकरोतु इति।)

**राजा**–इतः पत्रं दर्शय। (प्रतीहारी तथा करोति)

---

यावल्लताविटपलग्नं देव्याः परिचारिका अञ्चलं मोचयति तावन्निर्वाहितो मयात्मा। आत्मानमपि किमिति न भणसि। वयस्य, यदि भवानन्तःपुरकूटवागूरातो मोक्ष्यते ततोऽहं मेघच्छन्दप्रासादे आह्वास्यते। मेघेति प्रासाद नाम। इदं चार्थाच्चित्रफलकं तत्र गोपयामि यत्र पारावतं वर्जयित्वा न कोऽप्यन्यः प्रेक्षते।। अम्मो विस्मये। अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनां रक्षति। स्थिरसौहृदस्तावदेषः। जयति जयति देवः। अन्तरे मध्ये। देवं दृष्ट्वा(दृष्टा)। पत्रहस्तं मां प्रेक्ष्य प्रतिनिवृत्ता। उपरोधं प्रत्यूहम्।

**राजा**–(वाचयति) विदितमस्तु देवपादानाम्। धनवृद्धिनामा वणिग्वारिपथोपजीवी नौव्यसनेन विपन्नः। स चानपत्यस्तस्यानेककोटिसंख्यं वसु। तदिदानीं राजार्थताम् आपद्यते। इति श्रुत्वा देवः प्रमाणमिति।

**राजा**–(सविषादम्) कष्टं खल्वनपत्यता। वेत्रवति, महाधनत्वाद्बहुपत्नीकेनानेन भवितव्यम्। तदन्विष्यतां यदि काचिद् आपन्नसत्त्वा तस्य भार्या स्यात्।

**प्रतीहारी**–इदाणिं जेव साकेदअपुरस्स सेट्ठिणो दुहिदा णिव्वुत्तपुंसवणा तस्स जाआ सुणीअदि। (इदानीमेव साकेतकपुरस्य श्रेष्ठिनः दुहिता निर्वृत्तपुंसवना तस्य जाया श्रूयते।)

**राजा**–ननु स गर्भः पित्र्यम् रिक्थमर्हति। गत्वैवममात्यं ब्रूहि।

**प्रतिहारी**–जं देवो आणवेदि। (यद्देवो आज्ञापयति।) (इति प्रस्थिता।)

**राजा**–एहि तावत्।

**प्रतीहारी**–(निवृत्य) एस म्हि। (एषास्मि।)

**राजा**–अथवा किमनेन संततिरस्ति नास्ति वा।

**येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।**
**स स पापादृते तासां दुःषन्त इति घुष्यताम्।।6–26।।**

**प्रतीहारी**–इदं णाम घोसइदव्वं। (निष्क्रम्य पुनः प्रविश्य) देव, काले पवुट्ठं विअ सासणं अहिणन्दिदं महाजणेण देवस्स।

(इदं नाम घोषयितव्यम्। देव, काले प्रवृष्टमिव शासनमभिनन्दितं महाजनेन देवस्य।)

**राजा**–(दीर्घं निःश्वस्य) एवं भोः संततिविच्छेदनिरवलम्बना मूलपुरुषावसाने संपदः परमुपतिष्ठन्ते। ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः।

**प्रतीहारी**–पडिहदं अमङ्गलं। (प्रतिहतम् अमङ्गलम्।)

**राजा**–धिङ् मामुपनतश्रेयोऽवमानिनम्।

**मिश्रकेशी**–असंसअं पिअसहिं जेव हिअए कदुअ णिन्दिदो अणेण अप्पा भविस्सदि।

(असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितः अनेनात्मा भविष्यति।)

---

देवामात्यो विज्ञापयति एकं मया पौरकार्यं प्रत्यवेक्षितं तद् देवः पत्रारोपितं प्रत्यक्षीकरोतु। नाविति[86] नाविकवृत्तिः। राजात्मजां राजसुताम्। आपन्नसत्त्वा गर्भवती। देव, इदानीं साकेतकपुरस्य श्रेष्ठिनो दुहिता निर्वृत्तप्रसवा(निर्वृत्तपुंसवना) तस्य जायेति श्रूयते। श्रेष्ठी वणिगादिकुलमुख्यः। रिक्थं धनम्। यद्देव आज्ञापयति। इयमस्मि।। येनेति०।। (6–26)।। प्रजा लोकाः। पापात् पापिष्ठात् ऋते विना।। एवं इदं वा नाम घोषयितव्यम्। देव काले प्रवृष्टमिव शासनमभिवर्धितं जनेन देवस्य। प्रतिहतममङ्गलम्। असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा भविष्यति।।

86. प्रकाशिते मैथिलपुस्तके वारिपथोपजीवी नाविकवृत्तिरिति पठ्यते।

राजा–

**संरोपितेऽप्यात्मनि धर्मपत्नी**
**त्यक्ता मया नाम कुलप्रतिष्ठा।**
**कल्पिष्यमाणा महते फलाय**
**वसुन्धरा काल इवोप्तबीजा।। 6–27।।**

**मिश्रकेशी**–अपरिच्चत्ता दाणिं दे भविस्सदि। (अपरित्यक्ता इदानीं ते भविष्यति।)

**चेटी**–(जनान्तिकम्) अज्जे, एदं पत्तं पेसअन्तेण दिउणाणुदावो किदो भट्टा अमच्चेण। ता मेहच्छण्णावट्ठिदं संतावणिव्वावइत्तअं अज्जमाधव्वं गेण्हिअ आअच्छ।

(आर्ये, एतत्पत्रं प्रेषयता द्विगुणानुतापः कृतः भर्ता अमात्येन। तत्मेघच्छन्नावस्थितं संतापनिर्वापयितारम् आर्यमाधव्यं गृहीत्वा आगच्छ।)

**प्रतीहारी**–सुट्ठु दे भणिदं। (सुष्ठु ते भणितम्।) (इति निष्क्रान्ता)

**राजा**–अहो, दुःषन्तस्य संशयमारुढाः पिण्डभाजः।

**अस्मात्परं बत यथास्मृति संभृतानि**
**को नः कुले निवपनानि करिष्यतीति।**
**नूनं प्रसूतिविकलेन मया प्रसिक्तं**
**धौताश्रुसेकमुदकं पितरः पिबन्ति।। 6–28।।**

**मिश्रकेशी**–सदि क्खु दीवे ववधाणदोसेण अन्धआरं अणुभवदि राएसी। (सति खलु दीपे व्यवधानदोषेणान्धकारमनुभवति राजर्षिः।)

**चेटी**–भट्टा, अलं संताविदेण। वअत्थो ज्जेव पहू अवरासुं देवीसुं अणुरूवपुत्तजम्मेण पुव्वपुरिसाणं अरिणो भविस्सदि। (आत्मगतम्) ण मे वअणं पडिच्छदि भट्टा। अधवा अणुरूवं जेव ओसधं आदङ्कं णिअत्तेदि। (भर्तः, अलं संतापितेन। वयःस्थः एव प्रभुः अपरासु देवीषु अनुरूपपुत्रजन्मना पूर्वपुरुषाणामनृणः भविष्यति। न मे वचनं प्रतीच्छति भर्ता। अथवा– अनुरूपमेवौषधम् आतङ्कं निवर्तयति।)

---

संरोपित इति।। (6–27)।। आत्मनि संरोपितेऽर्थात् तस्या गर्भे जाते इत्यर्थः। यदुक्तम् "आत्मा वै जायते पुत्र" इति। काले वर्षासु।। अपरित्यक्तेदानीं ते भविष्यति। आर्ये इदं पत्रं प्रेषयता द्विगुणानुतापः कृतो भर्तामात्येन। तन्मेघच्छन्दावस्थितं संतापनिर्वापकमार्य-माधव्यं गृहीत्वा गच्छ। श्रेष्ठं प्रशस्तं यत्त्वया भणितम्। पिण्डभाजः पितरः।।

अस्मात्०।। (6–28)।। दुष्म(ष्य)न्तात्। निवपनानि जलाञ्जल्यादीनि। मृतोद्देश्यकोदकदानं निवापः। प्रसिक्तं दत्तम्। धौतेति क्रियाविशेषणम्। विन्यासो नाम नाट्यालङ्कारः। तदुक्तं–"निर्वेद-वाक्यवचनं विन्यासस्तु प्रकीर्तितः" इति शङ्करः।।

**राजा**–(शोकनाटितकेन) सर्वथा–

**आमूलशुद्धसंततिकुलमेतत्पौरवं प्रजावन्ध्ये।**
**मय्यस्तमितमनार्ये देश इव सरस्वतीस्रोतः।।6–29।।**

(इति मोहमुपागतः)

**चेटी**–(संसभ्रमम्) समस्ससदु समस्ससदु भट्टा। (समाश्वसितु समाश्वसितु भर्ता।)

**मिश्रकेशी**–किं इदाणिं जेव णं णिव्वुदं करइस्सं। अधवा सुदं मए सउन्तलं संभावअन्तीए देवजणणीए मुहादो जण्णभाअसमूसुआओ देवदाओ ज्जेव तधा करइस्सन्ति जधा सो भत्ता तुमं अइरेण धम्मवत्तिं अहिणन्दिस्सदि त्ति। ता ण जुत्तं मम एत्थ विलम्बिदुं। जाव इमिणा वुत्तन्तेण पिअसहिं सउन्तलं समस्ससेमि। (किमिदानीमेवेनं निर्वृत्तं करिष्यामि। अथवा श्रुतं मया शकुन्तलां संभावयन्त्याः देवजनन्याः मुखात् यज्ञभागसमुत्सुकाः देवताः एव तथा करिष्यन्ति। यथा सः भर्ता त्वामचिरेण धर्मपत्नीम् अभिनन्दिष्यतीति। तन्न युक्तं ममात्र विलम्बितुम्। यावदनेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि।

(इत्युद्भ्रान्तकेन निष्क्रान्ता।)

**नेपथ्ये**–भो, अव्बम्हण्णं अव्बम्हण्णं। (भोः अब्रह्मण्यम् .....। अब्रह्मण्यम्।)

**राजा**–(प्रत्यागतचेतनः कर्णं दत्त्वा) अये माधव्यस्येवार्तनादः।

**चेटी**–भट्टा, मा णाम सो माधव्वतवस्सी पिङ्गलिआमिस्सिआहिं चित्तफलअहत्थो पाविदो भविस्सदि। (भर्तः, मा नाम सः माधव्यतपस्वी पिङ्गलिकामिश्राभिः चित्रफलक-हस्तः प्राप्तः भविष्यति।)

**राजा**–चतुरिके, गच्छ। मद्वचनादनिषिद्धपरिजनां देवीमुपालभस्व।

**चेटी**–जं देवो आणवेदि। (यद्देवो आज्ञापयति।) (इति निष्क्रान्ता)

---

सति खलु दीपे व्यवधानदोषेणान्धकारमनुभवति राजर्षिः। भट्टारक अलं संतापितेन। वयःस्थ एव प्रभुः, अपरासु देवीष्वनुरूपपुत्रजन्मना पूर्वेषाम् अनृणो भविष्यामि। न मे वचनं प्रतिगृह्णाति भर्ता अथवानुरूपमेवौषधमातङ्कं निवर्तयति।।

आमूलेति०।। (6-29)।। प्रजापत्यं तद् वन्ध्ये अत एवानार्ये पापिष्ठे। यथानार्येऽधमदेशे सरस्वतीनदीस्रोतः।। समाश्वसितु समाश्वसितु भर्ता। किमिदानीमेवैनं निर्वृत्तं करिष्यामि। अथवा मया श्रुतं शकुन्तलां संभावयन्त्या देवजनन्या मुखात् यज्ञभागसमुत्सुका देवा एव तथा करिष्यन्ति यथा भर्ता त्वामचिरेण धर्मपत्नीमभिनन्दिष्यति। तन्न युक्तं ममात्र विलम्बितुम्। यावदेतेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि। उद्भ्रान्तकेन ऊर्ध्वगतिभेदेन। भो अब्रह्मण्यम् अब्रह्मण्यम्। अवध्योऽहमित्यर्थः। "अब्रह्मण्यम् अवध्योक्तावि" त्यमरः।

**नेपथ्ये**–भो, अव्बम्हण्णं अव्बम्हण्णं। (भो: अब्रह्मण्यं अब्रह्मण्यम्।)

**राजा**–परमार्थतो भीतिभिन्नस्वरो ब्राह्मण:। क: कोऽत्र भो:।

प्रविश्य **कञ्चुकी**–आज्ञापयतु देव:।

**राजा**–निरूप्यतां किमेवं माधव्यमाणवक: क्रन्दतीति।

**कञ्चुकी**–यावदालोकयामि। (इति निष्क्रम्य ससंभ्रमं पुन: प्रविष्ट:)

**राजा**–पार्वतायन। न खलु किं चिदत्याहितम्।

**कञ्चुकी**–एवम्।

**राजा**–तत्कुतोऽयं वेपथु:। तथा हि–

**प्रागेव जरसा कम्प: सविशेषेण सम्प्रति।**
**आविष्करोति सर्वाङ्गमश्वत्थमिव मारुत:।।6–30।।**

**कञ्चुकी**–परित्रायतां सुहृदं महाराज:।

**राजा**–कस्मात्परित्रातव्य:।

**कञ्चुकी**–महत: कृच्छ्रात्।

**राजा**–अयि, भिन्नार्थमभिधीयताम्।

**कञ्चुकी**–योऽसौ दिगवलोकनप्रासादो मेघच्छन्नो नाम।

**राजा**–किं तत्र।

**कञ्चुकी**–

**तस्याग्रभागाद्गृहनीलकण्ठैरनेकविश्रामविलङ्घ्यशृङ्गात्।**
**सखा प्रकाशेतरमूर्तिना ते केनापि सत्त्वेन निगृह्य नीत:।।6-31।।**

---

भट्टारक, मा नाम स माधव्यतपस्वी पिङ्गलिका–मिश्रिताभिश्चित्रफलकहस्त: प्राप्तो भविष्यति। ताभि: स हन्यत इति भाव:। नाम संभावनायाम्। मा काकौ। मा नामेत्यव्ययसमुदाय: संभावनार्थ इति केचित्। भो अब्रह्मण्यम् अब्रह्मण्यम्। "माणवको हावभेदे बाले कुपुरुषेऽपि च" इति मेदिनी। अत्याहितं महाभीतिरित्यमर:।

प्रागेवेति०।। (6-30)।। स कम्प: सम्प्रति विशेषेणाविष्करोति प्रकटयति च तमेवेत्यर्थ:। आविष्करोति चालयतीत्यन्य:।। परित्रायतां रक्षतु। अत्र पर्याप्नोत्विति पाठोऽमरटीकाकृद्भिर्धृत:। पर्याप्नोतु परित्रायताम्। स्यात् पर्याप्ति: परित्राणमित्यमर:। भिन्नार्थं व्यक्तार्थम्।।

तस्येति०।। (6-31)।। प्रकाशेति गुप्तशरीरेण अदृश्येनेत्यर्थ:। सत्त्वेन प्राणिना।।

ममापीति गर्वाख्यो नाम नाट्यालङ्कार:। तदुक्तं "गर्वोऽवलेपजं वाक्यमिति"।।

**राजा**–(सहसोत्थाय) आः। ममापि सत्त्वैरभिभूयन्ते गृहाः। अथ वा बहुप्रत्यवायं नृपत्वम्।

**अहन्यहन्यात्मनः एव ताव-**
**ज्ज्ञातुं प्रमादस्खलितं न शक्यम्।**
**प्रजासु कः केन पथा प्रयाती-**
**त्यशेषतः कस्य पुनः प्रभुत्वम्।। 6–32।।**

**नेपथ्ये**–अविद अविद भो। (अविद अविद भोः।)

**राजा**–(आकर्ण्य गतिभेदं रूपयन्) सखे, न भेतव्यं न भेतव्यम्।

**नेपथ्ये**–भो। कधं ण भाइस्सं। एसो मं को वि पच्छामोडिअ सिरोधरं इक्खुं विअ भग्गगण्ठिं करिदुं इच्छदि। (भोः कथं न भेष्यामि। एषः मां कोऽपि पश्चान्मोट्य शिरोधरम् इक्षुमिव भग्नग्रन्थिं कर्तुमिच्छति।)

**राजा**–(सदृष्टविक्षेपम्) धनुर्धनुस्तावत्।

प्रविश्य धनुर्हस्ता **यवनी**–भट्टा, एदं ससरं सरासणं हत्थावाओ अ।

(भर्ता, एतत् सशरं शरासनं हस्तावापः च। (राजा सशरं अनुरादत्ते)

**नेपथ्ये**–

**एष त्वामभिनवकण्ठशोणितार्थी**
**शार्दूलः पशुमिव हन्मि चेष्टमानम्।**
**आर्तानां भयमपनेतुमात्तधन्वा**
**दुःषन्तस्तव शरणं भवत्विदानीम्।। 6–33।।**

**राजा**–(सक्रोधम्) कथं मामेवोद्दिशति। आः। तिष्ठ तिष्ठ कौणपापसद। अयमिदानीं न भवसि। (चापमारोप्य) पार्वतायन, सोपानमार्गमादेशय।

**कञ्चुकी**–इत इतो देवः। (सर्वे सत्वरमुपसर्पन्ति)

**राजा**–(समन्तादवलोक्य) अये, शून्यमिदम्।

**नेपथ्ये**–परित्ताहि परित्ताहि। अहं भवन्तं पेक्खामि तुमं ण मं पेक्खसि। मज्जारगहिदो विअ उन्दुरो णिरासो म्हि जीविदे।

---

अहनीति०।। (6-32)।। प्रभुत्वं ज्ञातृत्वम्।। अभिधावेति अभिधावनं गतिभेदः। अतिशीघ्रं गच्छेत्यर्थः। भोः कथं न भेष्यामि। एष मां कोऽपि पश्चान्मोटित-शिरोधरमिक्षुमिव भग्नास्थिं कर्तुमिच्छति। मोटितं पाटितम्। उच्छुमिति उदिक्षुवृश्चिकयोरिति प्राकृतसूत्रात्।

भट्टारक इदं सशरं शरासनं हस्तावापश्च।।

एष०।। (6-33)।। चेष्टमानं करचरणादिप्रसारणशीलम्।।

(परित्राहि परित्राहि। अहं भवन्तं प्रेक्षे, त्वं न मां प्रेक्षसे। मार्जारगृहीतः इव उन्दुरः निराशः अस्मि जीविते।)

**राजा**–भोस्तिरस्करिणीगर्वित, किं मदीयमस्त्रमपि त्वां न पश्यति। स्थिरो भव। मा च ते वयस्यसम्पर्काद् विश्वासोऽभूत्। एष तमिषुं संदधे–

**यो हनिष्यति वध्यं, त्वां रक्ष्यं रक्षिष्यति द्विजम्।**
**हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः।।6–34।।**

(इति शस्त्रं संधत्ते)

(ततः प्रविशति मातलिर्विदूषकश्च)

**मातलिः**–आयुष्मन्

**कृताः शरव्यं हरिणा तवासुराः**
**शरासनं तेषु विकृष्यतामिदम्।**
**प्रमादसौम्यानि सतां सुहृज्जने**
**पतन्ति चक्षूंषि न दारुणाः शराः।।6–35।।**

**राजा**–(ससंभ्रममस्त्रमुपसंहरन्) अये, कथं मातलिः। स्वागतं देवराजसारथे।

**विदूषकः**–भो, मणं म्हि इमिणा अहं पसुमारणेण मारिदुं ण पारिदो। भवं उण इमं साअदेण अहिणन्ददि। (भोः मनाक् अस्मि अनेन अहं पशुमारणेन मारयितुं न पारितः। भवान् पुनः इमं स्वागतेन अभिनन्दति।)

**मातलिः**–(सस्मितम्) आयुष्मन्, श्रूयतां यदर्थमस्मि हरिणा त्वत्सकाशं प्रेषितः।

**राजा**–अवहितोऽस्मि।

**मातलिः**–अस्ति कालनेमिप्रसूतो दुर्जयो नाम दानवगणः।

**राजा**–श्रुतपूर्वो मया नारदात्।

**मातलिः**–

**सख्युस्ते स किल शतक्रतोरवध्य-**
**स्तस्य त्वं रणशिरसि स्मृतो निहन्ता।**

---

कौणपाः राक्षसाः। मृत्यावयं न भवसीति नाट्योक्तौ त्रिलोचनमिश्राः। सोपानमारोहणम्। परित्राहि। अहं भवन्तं प्रेक्षे। त्वं मां न प्रेक्षसे। तस्मान्मार्जारगृहीत इवोन्दुरुर्निराशोऽस्मि जीविते।। य:०।। (6-34)।। शरः। अपो जलानि। हंसस्वभावोऽयम्।। कृतेति०।। (6-35)।। शरव्यं लक्ष्यम्। हरिणा इन्द्रेण। शरव्या इति शङ्करधृतः पाठः।। भो मनागस्मि एतेन पशुमारणेन मारितुं न पारितः। भवान् पुनरिमं स्वागतेनाभिनन्दति। मनागल्पेन।। सख्युरिति०।। (6-36)।। अपाकरोति व्यसनयति। प्रतिवस्तूपमा।।

**उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-**
**स्तन्नैशं तिमिरमपाकरोति चन्द्रः।। 6–36।।**

स भवानात्तचाप एवेदानीं देवरथमारुह्य विजयाय प्रतिष्ठताम्।

**राजा**–अनुगृहीतोऽस्म्यनया मघवतः संभावनया। अथ भवद्भिर्माधव्यं प्रति किमेवं प्रयुक्तम्।

**मातलिः**–एतदपि कथ्यते। किंनिमित्तादपि मनस्तापादायुष्मान्विक्लवो दृष्टः। पश्चात्कोपयितुम् आयुष्यन्तं तथा कृतवानस्मि। कुतः–

**ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते।**
**तेजस्वी संक्षोभात्प्रायः प्रतिपद्यते तेजः।। 6-37।।**

**राजा**–वयस्य, अनतिक्रमणीया दिवस्पतेराज्ञा। तद्गच्छ। परिगर्तार्थं कृत्वा मद्वचनाद् अमात्यपिशुनं ब्रूहि।

**त्वन्मतिः केवला तावत्प्रतिपालयतु प्रजाः।**
**अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः।। 6–38।।**

**विदूषकः**–जं भवं आणवेदि। (यद्भवानाज्ञापयति।) (इति निष्क्रान्तः)

**मातलिः**–रथमारोहत्वायुष्यमान्। (राजा तथा करोति)

(इति निष्क्रान्ताः सर्वे)

।। षष्ठोऽङ्कः।।

---

संभावना आदरः। अथ प्रश्ने। आयुष्यमान् भवान्।।

ज्वल०।। 6-37।। विप्प(प्र)कृतः पीडितः। संक्षोभात् भयनिमित्तात्।।

व्यापृतं०।। (6-38)।। व्यापृतिः(तं) व्यावृत्तम्।। यद् भवान्[87] आज्ञापयति। रथमिति परालंकारः(?)।।

।। इति षष्ठाङ्क-विवरणम्।।

—•—

87. मातृका 4117 इत्यत्र यञ्च वानाज्ञा० इति पठ्यते।

## ।। सप्तमोऽङ्कः ।।

(ततः प्रविशत्याकाशवर्त्मना रथारूढो राजा मातलिश्च)

**राजा**–मातले, अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये।

**मातलिः**–आयुष्मन्, उभयत्राप्यसंतोषमवगच्छ। कुतः–

**उपकृत्य हरेस्तथा भवाल्लँघु सत्कारमवेक्ष्य मन्यते।**
**गणयत्यवदानसंमितां भवतः सोऽपि न सत्क्रियामिमाम्।। 7–1।।**

**राजा**–मा मैवम्। स खलु मनोरथानामप्यतिदूरवर्ती विसर्जनावसरे सत्कारः। मम हि दिवौकसां समक्षमर्धासनोपविष्टस्य

**अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन।**
**प्रमृज्य वक्षो हरिचन्दनाङ्कं मन्दारमाला हरिणा पिनद्धा।। 7–2।।**

**मातलिः**–किमिव सुरेशादायुष्मान्नार्हति। पश्य–

**सुखपरस्य हरेरुभयैः कृतं त्रिदिवमुद्धृत-दानवकण्टकम्।**
**तव शरैरधुना नतपर्वभिः पुरुषकेसरिणश्च पुरा नखैः।। 7–3।।**

**राजा**–अत्र खलु शतक्रतोरेव महिमा। पश्य–

**सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः**
**सम्भावनागुणमवेहि तमीश्वराणाम्।**
**किं प्राभविष्यदरुणस्तमसां वधाय**
**तं चेत्सहस्रकिरणो धुरि नाकरिष्यत्।। 7–4।।**

---

### ।। अथ सप्तमाङ्क-विवरणम्।।

अयुक्तमनुपकारकम्[88]। समर्थयेऽवगच्छामि। उभयत्र स्वविषये इन्द्रविषये च। उप०। (7-1)।। तवोपकृत्य लघु मन्यते। अवदानमसाधारणं कर्म, तत्तुल्यं न गणयति।। विसर्जनं प्रस्थापनम्। अन्तर्गतेति० (7-2)।। तन्माना नोथापनमित्यर्थः। हरिचन्दनेन, चन्दनभेदेन। वक्षः प्रमृज्य उपलिप्य। मयेति मस्तकस्थेनान्वयः। पारिजातमाला पिनद्धा। हरिचन्दनाङ्कमिति क्वचित्।। अथ लतेति० (7-3)।। पक्वता(?) सूचनार्थम्। पुरुषेति नृसिंहस्य।। सिध्यन्ति (7-4)।। कृतकृत्या भवन्ति। नियोज्याः सेवकाः। धुरि रथाग्रे।।

---

88. मातृका 4117 इत्यत्र पठ्यते।

**मातलिः**–सदृशं तवैतत्। (स्तोकमन्तरं गत्वा) आयुष्यन्। इतः पश्य नाकपृष्ठप्रस्थितस्य सौभाग्यमात्मयशसः।

**विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी कल्पलतान्तरेषु।**
**संचिन्त्य गीतिक्षममर्थतत्त्वं दिवौकसस्त्वच्चरितं लिखन्ति।। 7–5।।**

**राजा**–मातले, असुरसंप्रहारोत्सुकेन पूर्वेद्युरधिरोहता न लक्षितोऽयं प्रदेशो मया। तत्कतमस्मिन्पथि वर्तामहे मरुताम्।

**मातलिः**–

**त्रिस्रोतसं वहति यो गगनप्रतिष्ठां**
**ज्योतींषि वर्तयति चक्रविभक्तरश्मिः।**
**तस्य व्यपेतरजसः प्रवहस्य वायो-**
**र्मार्गो द्वितीयहरिविक्रमपूत एषः।। 7–6।।**

**राजा**–अतः खलु मे सबाह्यकरणोऽन्तरात्मा प्रसीदति। (रथाङ्गमवलोक्य) शङ्के मेघपदवीमवतीर्णाः स्मः।

**मातलिः**–आयुष्मन्, कथमवगम्यते।

**राजा**–

**अयमगविवरेभ्यश्चातकैर्निष्पतद्भि -**
**र्हरिभिरचिरभासां तेजसा चानुलिप्तैः।**
**गतमुपरि घनानां वारिगर्भोदराणां**
**पिशुनयति रथस्ते शीकरक्लिन्ननेमिः।। 7–7।।**

**मातलिः**–अथ किम्। अन्यच्च। क्षणादूर्ध्वमायुष्मानात्माधिकारभूमौ वर्तिष्यते।

---

विच्छि० (7-5)।। विच्छित्तिर्अङ्गरागः। "विच्छित्तिरङ्गरागेऽपि हारविच्छेदयोरपीति" विश्वः। वर्णैश्चन्दनादिभिः। कल्पलतावस्त्रेषु लिखन्ति गीतिक्षमं गने(गान)योग्यम् अर्थतत्त्वं अर्थजातम् वा।। तिस्रो० (7-6)।। ति(त्रि)स्रोतसं गङ्गाम्। गगनेति आकाशस्थाम्। ज्योतींषि[89] सूर्यादीनि। वर्तयति दधातीत्यर्थः। चक्रेति–चक्रकोषेण ज्योतिषा विभक्ता रश्मयो येन। त्वत् स्यन्दनप्रान्तासन्नकिरणं यथा स्यादिति तु शङ्करः। रजो गुणः प्रवहनाम्नो वायोर्द्वितीयेन हरेः विक्रमेण विशिष्टपादक्षेपेण पूतः। विक्रमः पाद इत्यन्यः।। करणम् इन्द्रियम्।

अयमिति० (7-7)।। अगाः पर्वताः। हरिभिरिन्द्राश्वैः। अचिरभासां विद्युताम्। जलगर्भमुदरं येषाम्।।

---

89. मातृका 4117 इत्यत्र ज्योतिंषि इति पठ्यते।

**राजा**–(अधोऽवलोक्य) मातले, वेगावतरणादाश्चर्यदर्शनः संपद्यते मनुष्यलोकः। तथाहि–

**शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी**
**पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः।**
**सन्धानं तनुभागनष्टसलिलव्यक्त्या व्रजन्त्यापगाः**
**केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते।। 7–8।।**

**मातलिः**–आयुष्मन्, साधु दृष्टम्। (सबहुमानमवलोक्य) अहो, उदग्ररमणीया पृथ्वी।

**राजा**–मातले, कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दी सांध्य इव मेघः सानुमान् अवलोक्यते।

**मातलिः**–आयुष्मन्, एष खलु हेमकूटो नाम किंपुरुषपर्वतः परं तपस्विनां सिद्धिक्षेत्रम्। पश्य–

**स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः।**
**सुरासुरगुरुः सोऽस्मिन् सपत्नीकस्तपस्यति।। 7–9।।**

**राजा**–(सादरम्) तेन ह्यनतिक्रमणीयानि श्रेयांसि। प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि।

**मातलिः**–आयुष्मन्, प्रथमः कल्पः।

(रथावतरणं नाटयित्वा) एताववतीर्णौ स्वः।

**राजा**–(सविस्मयम्) मातले,

**उपोढशब्दा न रथाङ्गनेमयः**
**प्रवर्तमानं न च दृश्यते रजः।**
**अभूतलस्पर्शतया निरुद्धति-**
**स्तवावतीर्णोऽपि न लक्ष्यते रथः।। 7–10।।**

**मातलिः**–एतावानेवायुष्मतः शतक्रतोश्च रथस्य विशेषः।

**राजा**–कतमस्मिन्प्रदेशे मारीचाश्रमः।

---

शैला० (7-8)।। शैलशिखरादवरोहतीव। पर्णेति पर्णसमूहलीनतामैक्यम्। कृशभागे नष्टस्य सलिलस्य भक्त्या तनुभावनष्टसलिला {व्यक्तमिति}। तनुभावः कृशता। व्यक्तं स्फुटमिति शङ्करः।।

उदग्रम् (7-9)।। अत्यर्थम्[90]। सानुमान् पर्वतः। मरीचेर्मरीचिनाम्नो यो जातः कश्यप इत्यर्थः।।

उपो०।।7-10।। रथाङ्गं चक्रम्। नेमिः प्रान्तः।

---

90. उदग्रमत्यर्थात् इति 4118 इत्यत्र पठ्यते।

**मातलिः**–(हस्तेन दर्शयन्) पश्य,

**वल्मीकार्धनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्रान्तर :**
**कण्ठे जीर्णलताप्रतानवलयेनात्यन्तसंपीडितः।**
**अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं**
**यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः।। 7–11।।**

**राजा**–(विलोक्य) नमोऽस्मै कष्टतपसे।

**मातलिः**–(संयतप्रग्रहं रथं कृत्वा) एतावदितिपरिवर्धितमन्दारवृक्षकं प्रजापतेराश्रमपदं प्रविष्टौ स्वः।

**राजा**–अहो, स्वर्गादिदमधिकतरं निर्वृतिस्थानम्। अमृतह्रदमिवावगाढोऽस्मि।

**मातलिः**–(रथं स्थापयित्वा) अवतरत्वायुष्यमान्।

**राजा**–(साभिनयमवतीर्य) भवान् कथमिदानीम्।

**मातलिः**–समययन्त्रित एवायमास्ते रथः। तद्वयमप्यवतरामः। (तथा कृत्वा) आयुष्मन्, इतो दृश्यन्तामत्रभवतां सिद्धमुनीनां तपोवनभूमयः।

**राजा**–ननु विस्मयादुभयमप्यवलोकयामि।

**प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने**
**तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया।**
**ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो**
**यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी।। 7–12।।**

**मातलिः**–उत्सर्पिणी खलु महतां प्रार्थना। (परिक्रम्याकाशे) वृद्धशाकल्य, किंव्यापारो भगवान्मारीचः। (आकर्ण्य) किं ब्रवीषि। एष दाक्षायण्या पतिव्रतापुण्यमधिकृत्य पृष्टस्तदस्यै कथयतीति। प्रतिपाल्यावसरः खलु प्रस्तावः।

(राजानमवलोक्य)

अस्यामशोकच्छायायामास्ताम् आयुष्मान् यावत्त्वामहमिन्द्रगुरवे निवेदयामि।

**राजा**–यथा भवान्मन्यते। (इति निष्क्रान्तो मातलिः।)

---

वल्मी०।। (7-11) सर्पकञ्चुक एव यज्ञोपवीतान्तरमस्य यज्ञोपवीती। यज्ञस्रगेव यज्ञोपवीतं तदन्तरं यस्येति शङ्करः।"अन्तरम–वकाशा–वधि–परिधाना–न्तर्धि–तादर्थ्ये"इत्यमरः। नीडः कुलायः। स्थाणुः शाखादिशून्यवृक्षः। अभ्यर्कबिम्बं सूर्यमण्डलस्याभिमुखम्।। कथमिदानीमिति "अव–तरिष्यामी"ति शेषः। तदा रथानवेक्षणादिति भावः। उभयं सुखं दुःखं चेत्यन्यः(?)।

प्राणा०।। (7-12) सत्कल्पवृक्षे०। विद्यमानकल्पतरौ। उत्सर्पिणी यथोत्तरवृद्धेति सुभेदः। दाक्षायण्यादित्या।

**राजा**–(निमित्तं सूचयित्वा)

**मनोरथाय नाशंसे किं बाहो स्पन्दसे मुधा।**
**पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते।।7–13।।**

(नेपथ्ये) मा खु मा खु चवलत्तणं करेहि। जहिं तहिं जेव अत्तणो पइदिं दंसेसि।

(मा खलु मा खलु चपलत्वं कुरु। यत्र तत्रैव आत्मनः प्रकृतिं दर्शयसि।)

**राजा**–(कर्णं दत्त्वा) अभूमिरियमविनयस्य। तत्को नु खल्वेवं निषिध्यते। (शब्दानुसारेणावलोक्य सविस्मयम्) अये, अयम् अनुरुध्यमानस्तापसीभ्याम् अबालसत्त्वो बालः।

**अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम्।**
**विलम्बिनं सिंहशिशुं करेणाहत्य कर्षति।।7–14।।**

(ततः प्रविशति यथानिर्दिष्टो बालस्तापस्यौ च)

**बालः**–यिम्भ ले सिंहशावआ यिम्भ। दन्ताइं दे गणइश्शं। (जृम्भस्व रे सिंहशावक, जृम्भस्व। दन्तान् ते गणयिष्यामि।)

**प्रथमा**–अविणीद, किं ति णो अपच्चणिव्विसेसाइं सत्ताइं विप्पकरेसि। संपहरदि विअ दे संरम्भो। ठाणे क्खु मुणिअणेण सव्वदमणो त्ति किदणामधेओ सि। (अविनीत, किं इति नः अपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि। सम्प्रहरति इव ते संरम्भः। स्थाने खलु मुनिजनेन सर्वदमन इति कृतनामधेयः असि।)

**राजा**–किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे हृदयम्। (विचिन्त्य) आम्। नूनमनपत्यता मां वत्सलयति।

**द्वितीया**–एसा तुमं केसरिणी लङ्घेदि जइ से पुत्तअं ण मुञ्चेसि। (एषा त्वां केसरिणी लङ्घयति यद्यस्याः पुत्रकं न मुञ्चसि।)

---

मनो० ।।(7-13)।। परिवर्ततेऽद्येति शेषः। श्रेयो यत्तत्पूर्वमवज्ञातम् इदानीं दुःखमेवेति भावः। यद्वा पूर्वावज्ञात-कल्याणं दुःखं यथा स्यात्तथा परिवर्तते दुःखेनेति शङ्करः।।

"मा खलु मा खलु चपलतां कुरु"। यत्र तत्रैवात्मनः प्रकृतिं स्वभावं दर्शयसि। युवानस्तरुणाः।

[अर्धपीतस्तनम्० ।। (7-14)] अर्द्धक्लिष्टो विपर्यस्तः केसरः। खलु बालः, विलम्बितं लम्बमानम्।।

जृम्भस्व रे सिंहशावक जृम्भस्व। मुख-व्यादानं विधेहि। दन्तांस्ते गणयिष्यामि। अविनीत किमिति नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकुरुषे, सोदरनिर्विशेषेषु एषु अस्मिन् वा दुःखं ते(?) संरम्भः। स्थाने खलु मुनिजनेन "सर्वदमन" इति कृतनामधेयोऽसि।

एषा त्वां केसरिणी लङ्घयति, भविष्यदर्थे लट्, यद्यस्याः पुत्रकं न मुञ्चसि। अम्मो विस्मये। बलवत् खलु भीतोऽस्मि। "बलिकम्" अव्ययमत्यर्थवाचीति शङ्करः।।

**बालः**–(सस्मितम्) अम्मो, बलिअं खु भीदे स्मि। (अम्मो, बलीयः खलु भीतोऽस्मि।) (इत्यधरं दशति)

**राजा**–(सविस्मयम्)

**महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे।**
**स्फुलिङ्गावस्थया वह्निरेधःक्षय इव स्थितः॥ 7–15॥**

**प्रथमा**–वच्छ, मुञ्च इमं बालमइन्दअं। अण्णं दे कीळणअं दाइस्सं। (वत्स, मुञ्चेमं बालमृगेन्द्रम्, अन्यं ते क्रीडनकं दास्यामि।)

**बालः**–कहिं शे। देहि मे। (कुत्र एषः, देहि मे।) (इति हस्तं प्रसारयति)

**राजा**–(हस्तं विलोक्य) कथं चक्रवर्तिलक्षणमनेन धार्यते। तथा हि–

**प्रलोभ्यवस्तुप्रणयप्रसारितो**
**विभाति जालग्रथिताङ्गुलिः करः।**
**अलक्ष्यपत्त्रान्तरमिद्धरागया**
**नवोषसा भिन्नमिवैकपङ्कजम्॥ 7–16॥**

**द्वितीया**–सुव्वदे, ण एसो सक्को वाआमेत्तकेण समइदुं। ता गच्छ, मम केरए उडए मङ्कणअस्स इसिकुमारअस्स केरओ वण्णअचित्तिदो मट्टिआमोरो चिट्ठदि। तं से उवहर। (सुव्रते, नैषः शक्यः वाङ्मात्रकेण शमयितुम्। तद्गच्छ। मदीये उटजे मङ्कणकस्य ऋषिकुमारकस्य वर्णकचित्रितः मृत्तिकामयूरः तिष्ठति। तमस्मै उपहर।)

**प्रथमा**–तधा। (तथा) (इति निष्क्रान्ता)

**बालः**–ताव इमिणा येव कीळिश्शं। (तावत् अनेनैव क्रीडिष्यामि।)

---

बीजं०॥ (7–15)॥ महतः कारणम्। शङ्करस्तु अयं बालो नोऽस्माकं तेजसः क्षत्रिय-रूपस्याहितमर्पितं बीजं रेतः प्रतिभातीत्याह। एधः क्षत्रिये काष्ठे क्षयार्थम्। एधः काष्ठे इति शङ्करः॥

मुञ्चेमं बालमृगेन्द्रम्। अन्यत्ते क्रीडनकं दास्यामि। कुत्र मे देहि। चक्रवर्तिलक्षणं अङ्कुशादिरेखारूपम्। तदुक्तम्–अङ्कुशं कुण्डलं चक्रं यस्य पाणितले भवेत्। चक्रवर्ती भवेन्नित्यं सामुद्रकवचो यथा॥ इति[91]॥]

प्रलोभ्य 0॥ (7–16)॥ प्रणयः प्रार्थनम्। संहताङ्गुलिः संश्लिष्टाङ्गुलिः करवत्तापि महापुरुषत्व सूचिका नवो यदापि जले पदे भुजारिति नरनारा[य]ण विशेषणमुक्तम्। जलेति करे आवर्तभेद इत्यन्यः। अलक्ष्यमदृश्य पत्रमभ्यन्तरं उषसा सन्ध्या उषः प्रत्युषसि क्लीबं पितृप्रस्वान्तयोषितीति कोषः। मुञ्चते मुञ्चैनं। न एवं शक्यो वाङ्मात्रेण शमयितुम् तद् गच्छ मदीये उटजे मङ्कणकस्य[92] ऋषिकुमारस्य वर्णकचित्रितो मृत्तिकामयूरस्तिष्ठति, तमस्मै उपहर। तावदेतेनैव क्रीडिष्यामि। मुञ्चैनम्।

91. मैथिलपाठे शङ्करस्य टीकायाम् इतस्तः गृहीतोऽयम् [[कोष्ठे निवेशितः]] अंशः अत्र समाप्यते।

92. देवनागरी–वाचनायां मार्कण्डेयस्येति पाठो दृश्यते।

**तापसी**–(विलोक्य हसन्ती) मुच्च णं। (मुञ्चैनम्।)

**राजा**–स्पृहयामि खलु दुर्ललितायास्मै। (निःश्वस्य)

**आलक्ष्यदन्तमुकुलाननिमित्तहासै-**
**रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।**
**अङ्काश्रयप्रणयिनस्तनयान्वहन्तो**
**धन्यास्तदङ्गरजसा परुषीभवन्ति।। 7–17।।**

**तापसी**–(साङ्गुलितर्जनम्) भो, ण मं गणेसि। (पार्श्वमवलोकयन्ती) को एत्थ इसि-कुमारआणं मज्झे। (राजानं दृष्ट्वा) भद्दमुह, एहि। मोआवेहि दाव इमिणा दुम्मोअहत्थग्गहेण डिम्भएण बाधीअमाणं बालमइन्दं।

(भो: न मां गणयसि। कोऽत्र ऋषिकुमारकाणां मध्ये। भद्रमुख, एहि मोचय तावदनेन दुर्मोचहस्तग्रहेण डिम्भकेन बाध्यमानं बालमृगेन्द्रम्।)

**राजा**–तथा। (इत्युपगम्य सस्मितम्) अयि भो महर्षिपुत्रक।

**एवमाश्रमविरुद्धवृत्तिना संयमी किमिति जन्मदस्त्वया।**
**सत्त्वसंश्रयसुखोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनः।। 7–18।।**

**तापसी**–भद्दमुह, ण क्खु एसो इसिकुमारओ। (भद्रमुख, न खल्वेषः ऋषिकुमारकः।)

**राजा**–आकारसदृशं चेष्टितमेवास्य कथयति। स्थानप्रत्ययात्तु वयमतर्किणः। (यथाभ्यर्थितमनुतिष्ठन्बालकस्य स्पर्शमनुभूयात्मगतम्)

**अनेन कस्यापि कुलाङ्कुरेण**
**स्पृष्टेषु गात्रेषु सुखं ममैवम्।**
**कां निर्वृत्तिं चेतसि तस्य कुर्याद्**
**यस्यायमङ्गात्कृतिनः प्रसूतः।। 7–19।।**

---

दुर्लङ्घं ललितमीप्सितं यस्य। आलक्ष्य०।। (7-17) अङ्के क्रोडे य आश्रयोऽवस्थानं तत्र प्रणयिणः प्रार्थकाः स्पृहा नाम नाट्यालंकारोऽयमिति शङ्करः। भो न मां गणयसि। कोऽत्र ऋषिकुमारकाणां मध्ये तिष्ठतीति शेषः। भद्रमुख, एहि तावत्। मोचय एतेन दुर्मोचहस्तग्रहेण बाध्यमानं बालमृगेन्द्रम्।

एवं०।। (7-18) वृत्तिर्व्यवहारः संयमी व्रती जन्मदः पिता, पुण्याश्रमे[93] सुखं यस्य, पुण्याश्रमं सुखं यस्मादिति वा। कण्वस्य ते मलिनीक्रियते। भद्रमुख, न खल्वेष ऋषिकुमारकः।

अनेन०।। (7-19)।। कृतिनो भाग्यवतः।।

आश्चर्यमाश्चर्यम्। अस्य बालस्यासन्न(?)पि भद्रमुखे सम्वादिनी आकृति(तिः), विस्मितासि।

---

93. पुण्याश्रमेण इति 4118 इत्यत्र पठ्यते।

**तापसी**–(उभौ विलोक्य) अच्छरीयं अच्छरीयं। (आश्चर्यम् आश्चर्यम्।)

**राजा**–आर्ये, किमिव।

**तापसी**–इमस्स बालअस्स असंबद्धे वि भद्दमुहे संवादिणी आकिदि त्ति विम्हिद म्हि। अवि अ वामसीलो वि भविअ अवरिचिदस्स ण दे पडिलोमो संवुत्तो।

(अस्य बालकस्य असंबद्धे अपि भद्रमुखे संवादिनी आकृतिः इति। विस्मितास्मि। अपि च वामशीलः अपि भूत्वा अपरिचितस्य न ते प्रतिलोमः संवृत्तः।)

**राजा**–(बालकमुल्लापयन्) आर्ये, न चेन्मुनिकुमारकोऽयं तत्कोऽस्य व्यपदेशः।

**तापसी**–पोरवो त्ति। (पौरवः इति)

**राजा**–(स्वगतम्) कथमेकान्वयोऽयमस्माकम्। अतः खलु सम्भाव्यते। (प्रकाशम्) अस्त्येतत्कुलव्रतं पौरवाणाम्।

**भवनेषु सुधासितेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम्।**
**विहितैकयतिव्रतानि पश्चात्तरुमूलानि गृहीभवन्ति तेषाम्।। 7-20।।**

कथं पुनरात्मगत्या मानुषाणामेष विषयः।

**तापसी**–जधा भद्दमुहो भणादि। अच्छरासम्बन्धेण उण इमस्स बालअस्स जणणी देवगुरुणो तवोवणे पसूदा। (यथा भद्रमुखः भणति। अप्सरःसंबन्धेन पुनः अस्य बालकस्य जननी देवगुरोः तपोवने प्रसूता।)

**राजा**–(आत्मगतम्) हन्त, द्वितीयमिदमाश्वासजननम्। (प्रकाशम्) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी।

**तापसी**–को तस्स धम्मदारपरिच्चाइणो णामं कित्तइस्सदि। (को तस्य धर्मदारपरित्यागिनः नाम कीर्तयिष्यति।)

**राजा**–(स्वगतम्) कथमियं कथा मामेव लक्षीकरोति। यदि तावदस्य शिशोर्नामतो मातरं पृच्छेयम्। (विचिन्त्य) अथवा अनार्यः परदारव्यवहारः।

---

अपि च, बालश्रील्पे(शीलो)पि भूत्वापरिचितस्य न ते प्रतिलोमः संवृत्तः। अपरिचितस्य ते वचनेन प्रकृतिस्थोऽयं संवृत्त इति पाठान्तरे।

उल्लापयन् चालयन् व्यपदिश्यते परिचीयतेऽनेनेति व्यपदेशो वंशादिः। पौरव इति।

भवने०।। (7-20)।। उशन्ति इच्छन्ति कुर्वन्तीत्यर्थः। नियतमद्वितीयं मुनिव्रतं येषु। यथा भद्रमुखी भणति। अप्सरः सम्बन्धेन पुनरस्य जननी देवगुरोस्तपोवने प्रसूता।।

हन्त हर्षे। कस्तस्य धर्मदारपरित्यागिनो नाम कीर्तयिष्यति। परिभाषणं निर्वहणाङ्गमिदम्। तदुक्तम् वदन्ति परिभाषणं परिवादकृतं वाक्यमिति।

सर्वदमन पश्य, शकुन्तलावण्यम्। अथ च शकुन्तलावर्णं रूपम्। कुत्र सा मे आर्या माता।

(प्रविश्य मृन्मय-मयूरहस्ता तापसी) सव्वदमण, पेक्ख सउन्तलावण्णं।

(सर्वदमन, प्रेक्षस्व शकुन्तलावण्यम्।)

**बालः**–(सदृष्टिविक्षेपम्) कहिं शा मे अय्युआ। (कुत्र सा मे अज्जुका) (उभे प्रहसिते)

**प्रथमा**–णामसारिस्सेण उवच्छन्दिदो मादिवच्छलो। (नामसादृश्येन उपच्छन्दितः मातृवत्सलः।)

**द्वितीया**–इमस्स मोरस्स रमणीअत्तणं पेक्ख त्ति भणिदो सि। (अस्य मयूरस्य रमणीयत्वं प्रेक्षस्व इति भणितोऽसि।)

**राजा**–(स्वगतम्) कथं शकुन्तलेत्यस्य मातुराख्या। अथवा सन्ति पुनर्नामसादृश्यानि। अपि नाम मृगतृष्णिकेव नायमन्ते प्रस्तावो विषादाय कल्पेत।

**बालः**–अन्तिके लोअदि मे चडुलके एशे मऊलके। (अन्तिके, रोचते मे चटुलः एषः मयूरकः।) (इति क्रीडनकमादत्ते)

**प्रथमा**–(विलोक्य सावेगम्) अम्मो, रक्खागण्डओ से मणिबन्धे ण दीसदि। (अम्मो, रक्षागण्डकः अस्य मणिबन्धे न दृश्यते।)

**राजा**–आर्ये, अलमावेगेन। नन्वयमस्य सिंहशावकविमर्दात्परिभ्रष्टः। (इत्यादातुमिच्छति)

**उभे**–मा खु मा खु। (विलोक्य) कधं गहिदं जेव। (मा खलु मा खलु। कथं गृहीतमेव।) (उभे विस्मयादुरसि निहितहस्ते परस्परमालोकयतः)

**राजा**–किमर्थं भवतीभ्यां प्रतिषिद्धोऽस्मि।

**प्रथमा**–सुणादु महाभाओ। महप्पहावा एसा अवराइदा णाम सुरमहोसही इमस्स दारअस्स जादकम्मसमए भअवदा मारीचेण दिण्णा। एदं किल मादापिदरे अत्ताणअं च वज्जिअ अवरो भूमिपडिदं ण गेण्हदि। (शृणोतु महाभागः। महाप्रभावैषापराजिता नाम सुरमहौषधिः अस्य दारकस्य जातकर्मसमये भगवता मारीचेन दत्ता। एतां किल मातापितरौ आत्मानञ्च वर्जयित्वा अपरः भूमिपतितां न गृह्णाति।)

---

अज्जुका शब्दो मातरि देशीय इति शङ्करः। नामसादृश्येन उपच्छिन्दितः प्रलोभितमातृवत्सलः। एतस्य मयूरस्य रमणीयत्वं प्रेक्षस्वेति भणितोऽसि। अन्तिके, रोचते मे चटुलक एष मयूरः। "अन्तिका भगिनी ज्येष्ठा अत्रार्तिकेत्यपि साध्वित्याभिधानिकाः"। अन्तिका धात्रीति शङ्करः। अम्मो कष्टे, रक्षागण्डकोऽस्य मणिबन्धे न दृश्यते। गण्डको वीद इति ख्यातो जातुषभेदः, मणिबन्धे करमूले। मा खलु मा खलु संप्रक्ष्यसीति शेषः। कथं गृहीतमेवानेन। शृणोतु महाभागः महाप्रभावा खल्वेषौपराजिता नाम सुरमहौषधिः, एतस्य दारकस्य जातकर्मसमये भगवता मारीचेन दत्ता, एतां किल मातापितरावात्मनो वर्ज्जयित्वापरा भूमिपतितां न गृह्णाति। सा सर्पो भूत्वा तं दशति। अनेकशः। सहर्षमिति प्रहर्ष नामा नाट्यालङ्कारः।

**राजा**–अथ गृह्णाति।

**प्रथमा**–तदा सप्पो भविअ तं दंसदि। (तदा सर्पः भूत्वा तं दंसति।)

**राजा**–अथात्रभवतीभ्यां कदाचिद् अन्यत्र प्रत्यक्षीकृतमिदम्।

**उभे**–अणेअसो। (अनेकशः)

**राजा**–(सहर्षम्) तत्किं खल्विदानीं पूर्णामात्मनो मनोरथं नाभिनन्दामि। (इति बालकं परिष्वजते)

**द्वितीया**–सुव्वदे, एहि। इमं वुत्तन्तं णिअमवाउलाए सउन्तलाए गदुअ णिवेदेम्ह। (सुव्रते, एहि इमं वृत्तान्तं नियमव्याकुलायै शकुन्तलायै गत्वा निवेदयाव।) (इति निष्क्रान्ते)

**बालः**–मुञ्च मं। अय्युआशआशं गमिश्शं। (मुञ्च माम्। अज्जुकासकाशं गमिष्यामि।)

**राजा**–पुत्रक, मयैव सह मातरमभिनन्दयिष्यसि।

**बालः**–दुश्शन्ते मम तादे ण क्खु तुमं। (दुःषन्तः मम तातः, न खलु त्वम्।)

**राजा**–(सस्मितम्) एष विवाद एव मां प्रत्याययति।

(ततः प्रविशत्येकवेणीधरा शकुन्तला)

**शकुन्तला**–(सवितर्कम्) विआरकाले वि पइदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसङ्को अत्तणो भाअधेएसुं। अधवा जधा मिस्सकेसीए मे आचक्खिदं तधा सम्भावीअदि एदं। (विकारकाले अपि प्रकृतिस्थां सर्वदमनस्योषधिं श्रुत्वा न मे आसङ्कः आत्मनः भागधेयेषु। अथवा यथा मिश्रकेश्या मे आख्यातं तथा सम्भाव्यते एतत्।)

(इति परिक्रामति)

**राजा**–(शकुन्तलां दृष्ट्वा सहर्षखेदम्) अये, इयमत्रभवती शकुन्तला–

**वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः।**
**अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति।। 7-21।।**

---

तदुक्तं प्रहर्षः प्रमदाद्वाक्यमिति। सुव्रते, एहि। इमं वृत्तान्तं नियमव्याकुलायै शकुन्तलायै निवेदयावः। मुञ्च मां, आर्या(अज्जुका) सकाशं गमिष्यामि। दुःष्म(ष)न्तो मम तातो। न खलु त्वम्। विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न मे आसङ्क आत्मनो भागधेयेषु। आसङ्कमशचुः(शुचः) प्राकृते अश्वासार्थः। अथवा यथा मिश्रकेश्या मे आख्यातं तथा संभाव्यते इदम्। वसने०।। (7-21) धूसरे मलिने रोलः केशविन्यासः तथा च भरतः अमलास्ववधारणमलकाञ्च कल्पनम्। अनुलेपनसंस्कारं न कुर्यात् पथिकाङ्गना। पाण्डुच्छायाङ्कुशतनुर्वेणीयुतशिरोरुहा। लम्बालकादीना केशाविवर्जित भूषणेति। न खल्वार्यपुत्रोऽयं तव। कः खल्वेष कृतरक्षामङ्गलं मे दारकं गात्रसङ्गेन दूषयति। दारकं बालकम्। आर्ये, एष कोऽपि पुत्रक इत्यालपति। हृदय, समाश्वसिहि। प्रहार्य निवृत्तमात्सर्येण अनुकम्पितास्मि दैवेन। आर्यपुत्र एवैषः।

**शकुन्तला**–(पश्चात्तापविवर्णं राजानमवलोक्य सवितर्कम्) ण क्खु अज्जउत्तो अअं। ता को णु क्खु एसो किदरक्खामङ्गलं मे दारअं गत्तसङ्गेण दूसेदि। (न खल्वार्यपुत्रोऽयम्। तत् कोऽनु खल्वेषः कृतरक्षामङ्गलं मे दारकं गात्रसङ्गेन दूषयति।)

**बालः**–(मातरमुपगम्य) अय्युए, एशे के वि पलकेलए मं पुत्तके त्ति आलवेदि। (अज्जुके, एषः कोऽपि परकीयः मां पुत्रकः इति आलपति।)

**राजा**–प्रिये, क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम्। तदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानमिच्छामि।

**शकुन्तला**–(स्वगतम्) हिअअ, समस्सस समस्सस। पहरिअ णिव्वुत्तमच्छरेण अणुकम्पिद म्हि देव्वेण। अज्जउत्तो ज्जेव एसो। (हृदय, समाश्वसिहि समाश्वसिहि। प्रहार्य निर्वृत्तमात्सर्येणानुकम्पितास्मि दैवेन। आर्यपुत्रः एवैषः।)

**राजा**–

**स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि।**
**उपरागान्ते शशिनः समुपगता रोहिणी योगम्।। 7–22।।**

**शकुन्तला**–जअदु जअदु। (जयतु जयतु।) (इत्यर्धोक्ते बाष्पकण्ठी विरमति)

**राजा**–प्रिये।

**बाष्पेन प्रतिषिद्धेऽपि जयशब्दे जितं मया।**
**यत्ते दृष्टमसंस्कारपाटलौष्टमिदं मुखम्।। 7–23।।**

**बालः**–अय्युए, के एशे। (अज्जुके, कः एषः।)

**शकुन्तला**–वच्छ, भाअधेआइं पुच्छ। (वत्स, भागधेयानि पृच्छ।) (इति रोदिति)

**राजा**–

**सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते**
**किमपि मनसः संमोहो मे तदा बलवानभूत्।**
**प्रबलतमसामेवंप्रायाः शुभेष्वपि वृत्तयः**
**स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया।। 7-24।।**

(इति पादयोः पतति)

---

स्मृति०।। (7–22) प्रमुखे सम्मुखे प्रतिवस्तूपमा।

बाष्पे०।। (7–23) अलकः केशभेदः। लोला अलका यत्र पाटलौष्ठेति च पाठः। आर्ये, क एषः। वत्स, भागधेयानि पृच्छ। भाग्यमेव भागधेयम्।

सुतनु०।। (7–24) प्रत्याख्यानेति निराकरणं विश्रियं, परिहाराख्य–नाट्यालङ्कारोऽयम्।

**शकुन्तला**–उत्थेदु उत्थेदु अज्जउत्तो। णूणं मम सुहप्पडिबन्धअं पुराकिदं तेसुं दिअसेसुं परिणामसुहं आसि जेण साणुक्कोसो वि अज्जउत्तो तधा संवुत्तो। (उत्तिष्ठतु उत्तिष्ठतु आर्यपुत्रः। नूनं मम सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामसुखम् आसीत्, येन सानुक्रोशः अप्यार्यपुत्रः तथा संवृत्तः।)

(राजा उत्तिष्ठति)

**शकुन्तला**–अध कधं अज्जउत्तेण सुमरिदो अअं दुक्खभाई जणो। (अथ कथमार्यपुत्रेण स्मृतः अयं दुःखभागी जनः।)

**राजा**–उद्धृतविषादशल्यः कथयामि।

**मोहान्मया सुतनु पूर्वमुपेक्षितस्ते**
**यो बाष्पबिन्दुरधरं परिबाधमानः।**
**तं तावदाकुटिलपक्ष्मविलग्नमद्य**
**कान्ते प्रमृज्य विगतानुशयो भवामि।। 7–25।।**

(इति यथोक्तमनुतिष्ठति)

**शकुन्तला**–(प्रमृष्टबाष्पाङ्गुलीयकं विलोक्य) अज्जउत्त। तं इदं अङ्गुलीअअं। (आर्यपुत्र, तदिदमङ्गुरीयकम्।)

**राजा**–अथ किम्। अस्माद् अद्भुतोपलम्भान्मया स्मृतिरुपलब्धा।

**शकुन्तला**–संपादिदं खु अणेण जं तधा अज्जउत्तस्स पच्चअकारणं दुल्लहं मे आसि। (सम्पादितं खल्वनेन यत् तथा आर्यपुत्रस्य प्रत्ययकारणम् दुर्लभं मे आसीत्।)

**राजा**–तेन हि, ऋतुसमागमाशंसि प्रतिपद्यतां लता कुसुमम्।

**शकुन्तला**–ण से विस्ससामि। अज्जउत्तो ज्जेव णं धारेदु। (न अस्य विश्वसिमि। आर्यपुत्रः एव एतत् धारयतु।)

प्रविश्य **मातलिः**–दिष्ट्या, धर्मपत्नीसमागमेन पुत्रमुखसन्दर्शनेन चायुष्मान्वर्धते।

**राजा**–सुहृत्संपादितत्वात्साधुतरफलो मे मनोरथः। मातले, न खलु विदितोऽयम् आखण्डलस्यार्थः।

---

तदुक्तम्–परिहारः परिज्ञेयं कृतानुचितमार्जनमिति। उत्तिष्ठ उत्तिष्ठत्वार्यपुत्र। नूनं मम सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणतमासीत्। येन सानुक्रोशोऽप्यार्यपुत्रस्तथा संवृत्तः। अथ कथमार्यपुत्रेण स्मृतोऽयं दुःखभागिनी जनः।

मोहा०।। (7–25) परिबाधमानः प्री(पी)डयन्। आर्यपुत्र तदिदम् अङ्गुरीयकम्। सम्पादितं खलु(ल्व)नेन यत्तदार्यपुत्रस्य प्रत्ययकारणं दुर्लभं मे आसीत्। नास्य विश्वसिमि। आर्यपुत्र एवैनं धारयतु। सुहृदां भवतां सम्पादितत्वात्। लज्जे खल्वार्यपुत्रेण सह गुरुजनसमीपं गन्तुम्।

**मातलिः**–(सस्मितम्) किमीश्वराणां परोक्षम्। एहि। भगवान्मारीचस्ते दर्शनमिच्छति।

**राजा**–प्रिये, अवलम्ब्यतां पुत्रः। त्वामेव पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि।

**शकुन्तला**–लज्जामि क्खु अज्जउत्तेण सद्धं गुरुअणसमीवं गन्तुं। (लज्जे खलु आर्यपुत्रेण सार्धं गुरुजनसमीपं गन्तुम्।

**राजा**–आचरितमेतदभ्युदयकालेषु। तदेहि तावत्। (इति परिक्रामन्ति)

(ततः प्रविशत्यदित्या सहासनोपविष्टो मारीचः)

**मारीचः**–(राजानमवलोक्य) दाक्षायणि।

**पुत्रस्य ते रणशिरस्ययमग्रयायी**
**दुःषन्त इत्यभिहितो भुवनस्य भर्ता।**
**चापेन यस्य विनिवर्तितकर्म जातं**
**तत्कोटिमत्कुलिशमाभरणं मघोनः।। 7–26।।**

**अदितिः**–सम्भावणीअप्पहावा खु से आकिदी। (सम्भावनीयप्रभावा खल्वस्य आकृतिः।)

**मातलिः**–भूपते, एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमेवावलोकयतः। तदुपसर्प।

**राजा**–मातले,

**प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं**
**भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम्।**
**यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं**
**द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम्।। 7–27।।**

**मातलिः**–अथ किम्।

**राजा**–(प्रणिपत्य) उभाभ्यामपि वां वासवनियोज्यो दुःषन्तः प्रणमति।

**मारीचः**–वत्स, चिरं पृथिवीं पालय।

**अदितिः**–जाद, अप्पदिरधो होहि। (जात, अप्रतिरथः भव।)

(शकुन्तला पुत्रसहिता पादयोः पतति)

---

पुत्रस्य०।। (7-26) कोटिमत् ति(ती)क्ष्णाग्रेशालि आभरणं भूषणमेव, न तु तेन युक्तमाचरतीत्यर्थः। सम्भावनीयप्रभावा आपन्नाकृतिः।

प्राहुः०।। (7-27) द्वादशधेति सूर्यस्येत्यर्थः। यज्ञेति इन्द्रं आत्मभुवो ब्रह्मणः परः पुरुषो नारायणः।

जात भर्तुर्बहुम[ता] भव, यावताराय(?)। अप्रतिहतरथो भव।

**मारीचः**–वत्से,

**आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः।**
**आशीरन्या न ते योज्या पौलोमीमङ्गला भव।।7–28।।**

**अदितिः**–जाद, भत्तुणो बहुमदा होहि। अअं च दीहाऊ उहअपक्खं अलंकरेदु। ता एध उपविसध। (जात, भर्तुः बहुमता भव। अयं च दीर्घायुः उभयपक्षं अलङ्करोतु। तत् एत उपविशत।)

(सर्वे उपविशन्ति)

**मारीचः**–एकैकं निर्दिशन्।

**दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान्।**
**श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम्।।7–29।।**

**राजा**–भगवन्, प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनमित्यपूर्वः खलु वोऽनुग्रहः। पश्यतु भगवान्।

**उदेति पूर्वं कुसुमं ततः फलं**
**घनोदयः प्राक्तदनन्तरं पयः।**
**निमित्तनैमित्तिकयोरयं विधि-**
**स्तव प्रसादस्य पुरस्तु सम्पदः।।7–30।।**

**मातलिः**–आयुष्मन्, एवं विश्वगुरवः प्रसीदन्ति।

**राजा**–भगवन्, इमामाज्ञाकरीं वो गान्धर्वेण विधिनोपयम्य कस्य चित्कालस्य बन्धुभि-रानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मद्गोत्रस्य कण्वस्य। पश्चादेनामङ्गुरीयकदर्शनादूढपूर्वामवगतोऽस्मि। तच्चित्रमिव मे प्रतिभाति।

**यथा गजे साधुसमक्षरूपे**
**कस्मिन्नपि क्रामति संशयः स्यात्।**
**पदानि दृष्ट्वाथ भवेत्प्रतीति-**
**स्तथाविधो मे मनसो विकारः।।7–31।।**

---

अङ्ग०।। (7-28) पौलोमीति अविधवा भवेत्यर्थः। शङ्करस्तु भर्ता इन्द्रतुल्यो भवतु, जयन्ततुल्यश्च पुत्रो भवत्वित्याह। आशीर्न्नाम नाट्यालङ्कारोऽयम्। जात, भर्तुर्बहुमता भव। अयञ्च ते दीर्घायुरुभयपक्षेऽलङ्करोतु। तदत्रोपविशतु।। दिष्ट्या०।। (7-29) दिष्ट्या आनन्दे श्रद्धा प्रसिद्धा वेदबोधिताचरणं विधिः।

उदेति०।। (7-30) प्रियोक्ति नाम नाट्यलक्षणमिदम्। तदुक्तं स्यात् संप्रीणयितुम् पूज्यं(?) प्रियोक्तिर्हर्षभाषणमिति। कस्यचित् कस्मिंश्चिदित्यर्थः। षष्ठी सप्तम्यो(म्य)भावात्।

यथा०।। (7-31) साधु आबाधितं समक्षं विद्यमानं रूपं यस्य। पदानि पदचिह्नानि।

**मारीचः**–वत्स, अलमात्मापराधशङ्कया। संमोहोऽपि त्वय्युपपन्न एव। श्रूयताम्।

**राजा**–अवहितोऽस्मि।

**मारीचः**–यदैवाप्सरस्तीर्थावतरणात्प्रत्याख्यानविक्लवां शकुन्तलामादाय दाक्षायणीमुपगता मेनका तदैव ध्यानादवगतवृत्तान्तोऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणा प्रत्यादिष्टेति। स चाङ्गुरीयकदर्शनावसानः शापः।

**राजा**–(सोच्छ्वासमात्मगतम्) एष वचनीयान्मुक्तोऽस्मि।

**शकुन्तला**–(स्वगतम्) दिट्ठिआ। अकामपच्चादेसी अज्जउत्तो। ण उण सच्चं मं सुमरेदि। अधवा ण सुदो भवे अअं सुण्णहिअआए मए सावो, जदो सहीहिं अच्चादरेण संदिट्ठं भत्तुणो अङ्गुलीअअं दंसेसि त्ति। (दिष्ट्या। अकामप्रत्यादेशी आर्यपुत्रः। न पुनः सत्यं मां स्मरति। अथवा न श्रुतः भवेत् अयं शून्यहृदयया मया शापः, यतः सखीभिः अत्यादरेण संदिष्टं भर्तुः अङ्गुरीयकं दर्शयसि इति।)

**मारीचः**–वत्से, विदितार्थासि। तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः करणीयः। पश्य–

**शापादसि प्रतिहता स्मृतिलोपरूक्षे**
**भर्तर्यपेततमसि प्रभुता तवैव।**
**छाया न मूर्च्छति मलोपहतप्रसादे**
**शुद्धे तु दर्पणतले सुलभावकाशा।। 7–32।।**

**राजा**–यथाह भगवान्।

**मारीचः**–वत्स, कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मादिक्रियः पुत्र एष शाकुन्तलेयः।

**राजा**–भगवन्, अत्र खलु मे वंशप्रतिष्ठा।

**मारीचः**–तथा शौर्यस्वभावेन चक्रवर्तिनमेनमवगच्छतु भवान्। पश्य–

**रथेनानुद्धातस्तिमितगतिनोत्तीर्णजलधि :**
**पुरा सप्तद्वीपाम् अवति वसुधामप्रतिरथः।**

---

दिष्ट्या अकामप्रत्यादेशी आर्यपुत्रः। न पुनः सत्यं मां स्मरति। अथवा न श्रुतो भवेदयं शून्यहृदयया शापः। लकारश्चकारौ। यतः सखीभिरत्यादरेण सन्दिष्टं भर्तुरङ्गुरीयकं दर्शयिष्यसीति। शापा०।। (7-32) रुक्षे कलुषे अत्र हेतुः शापादिति। तमोऽज्ञानं मूर्च्छति स्फुरति।

रथेन०।। (7-33) सप्तद्वीपां सप्तद्वीपवतीं पुरा अवति पालयिष्यति भविष्यति ल(लृ)ट्। अनया पितृदुहितुर्मनोरथसम्पत्या कण्वोऽपि तावद्विज्ञातार्थः क्रियताम्। मेनका पुनरत्र मां परिचरन्ती सुसपिहितेन। मम मनोरथो व्याहतो भवत्या विहायसा आकाशेन।

**इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः**
**पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात्।। 7–33।।**

**राजा**–भगवत्कृतसंस्कारेऽस्मिन्सर्वमाशंसे।

**अदितिः**–इमाए दुहिदिआए मणोरधसम्पत्तीए कण्णो वि दाव विण्णादत्थो करीअदु। मेणआ उण इध मं परिअरन्ती संणिहिदा जेव चिट्ठदि। (अनया दुहितुः मनोरथसम्पत्त्या कण्वः अपि तावत् विज्ञातार्थः क्रियताम्। मेनका पुनः इह मां परिचरन्ती सन्निहिता एव तिष्ठति।)

**शकुन्तला**–(स्वगतम्) मम मणोरधो वाहरिदो भअवदीए। (मम मनोरथः व्याहृतः भगवत्या।)

**मारीचः**–तपः प्रभावात्सर्वमिदं प्रत्यक्षं तत्रभवतः कण्वस्य। (विचिन्त्य) तथाप्यसौ दुहितुः सपुत्रायाः पत्या परिग्रहात्प्रियमस्माभिः श्रावयितव्यः। कः कोऽत्र भोः।

प्रविश्य **शिष्यः**–भगवन्, अयमस्मि।

**मारीचः**–गालव, मद्वचनादिदानीमेव विहायसा गत्वा तत्रभवते कण्वाय प्रियमावेदय यथा पुत्रवती शकुन्तला दुर्वाससः शापनिवृत्तौ स्मृतिमता दुःषन्तेन गृहीतेति।

**शिष्यः**–यथाज्ञापयति भगवान्। (इति निष्क्रान्तः)

**मारीचः**–(राजानं प्रति) वत्स, त्वमपि सापत्यदारः सख्युराखण्डलस्य रथमास्थाय स्वां राजधानीं प्रतिष्ठस्व।

**राजा**–यथाज्ञापयति भगवान्।

**मारीचः**–सम्प्रति हि–

**तव भवतु बिडोजाः प्राज्यवृष्टिः प्रजासु**
**त्वमपि विततयज्ञो वज्रिणं प्रीणयालम्।**
**युगशतपरिवृत्तैरेवमन्योन्यकृत्यै –**
**र्नयतमुभयलोकानुग्रहश्लाघनीयौ ।। 7–34।।**

**राजा**–भगवन्, यथाशक्ति श्रेयसि प्रयतिष्ये।

**मारीचः**–वत्स, किं ते भूयः प्रियमुपकरोमि।

---

तव०।। (7–34) बिडौजा इन्द्रः प्राज्यं प्रचुरम्। किं ते भूय इति निर्वहणाङ्क काव्यसंहारोऽयम्। तदुक्तं वरप्रदानसंप्राप्तिः काव्यसंहार इष्यत इति।।

**राजा**–भगवन्, अतः परमपि प्रियमस्ति। तथाप्येतदस्तु।

**प्रवर्ततां प्रकृतिहिताय पार्थिवः**
**सरस्वती श्रुतिमहतां महीयताम्।**
**ममापि च क्षपयतु नीललोहितः**
**पुनर्भवं परिगतभक्तिरात्मभूः।। 7–35।।**

(इति निष्क्रान्ताः सर्वे)

।। इति सप्तमोऽङ्कः।।

---

पुन०।। (7-35) श्रुतिमतां वेदविदां महीयतां पूजिता भवतु। प्रसन्निति यावत् नीललोहितः शिखः(वः) आत्मनाम्बाभावेन परिगता आश्रिता शक्तिः सकलभुवनशासनानुग्रहक्षमं सामर्थ्यं यस्तु नित्यशक्तिरित्यर्थः। यद्वा परिगतशक्तिः सगौरीकः आगमे शक्तिपदेन गौर्याविधानात्। आत्मभूरिति क्वचित् पाठः। प्रशस्ति(?)सामर्थ्यकम् इदं तदुक्तं.......भूपतेः शान्तिरस्तु प्रशस्तिरित्यभिधीयते इति।।

**इति महामहोपाध्याय-श्रीविष्णुपण्डित-तनुजन्म**
**श्रीचन्द्रशेखर-चक्रवर्तिकृतावभिज्ञानशकुन्तलटीकायां**
**[ज्ञान]सन्दर्भदीपिकायां[94] सप्तमाङ्कविवरणं समाप्तम्।।**

श्रीहरये नमः।। श्रीरामाय नमः।।
शकाब्दाः 1728।। ॐ गङ्गायै नमः।।[95]
।। शुभं भूयात्।।

---

94. मातृका 4117 इत्यत्रैव ज्ञानसन्दर्भदीपिकेति नाम पठ्यते।
95. मातृका 4118 इत्यत्र लेखनकालो नैव लिखितः।।

# परिशिष्ट–1

| सं० | चन्द्रशेखरेण निर्दिष्टाः श्लोकाः।। | अङ्कः | क्रमः | पृष्ठांकः |
|---|---|---|---|---|
| 1 | अक्लिष्टबालतरुपल्लव० | 6 | 23 | 210 |
| 2 | अतः समीक्ष्य कर्तव्यं विशेषात्० | 5 | 27 | 188 |
| 3 | अद्यापि नूनं हरकोपवह्नि० | 3 | 3 | 135 |
| 4 | अधरः किसलयरागः कोमल० | 1 | 21 | 108 |
| 5 | अध्याक्रान्ता वसतिरमुना० | 2 | 15 | 130 |
| 6 | अनवरतधनुर्ज्यास्फालन० | 2 | 4 | 124 |
| 7 | अनाघ्रातं पुष्पं किसलयमलूनं० | 2 | 11 | 128 |
| 8 | अनिर्दयोपभोग्यस्य रूपस्य० | 3 | 30 | 148 |
| 9 | अनिशमपि मकरकेतुर्मनसो० | 3 | 5 | 135 |
| 10 | अनुकारिणि पूर्वेषां युक्ति० | 2 | 17 | 131 |
| 11 | अनुमतगमना शकुन्तला सा तरुभि० | 4 | 12 | 167 |
| 12 | अनुयास्यन् मुनितनयां सहसा० | 1 | 29 | 116 |
| 13 | अनेन कस्यापि कुलांकुरेण० | 7 | 19 | 226 |
| 14 | अनेन लीलाभरणेन ते प्रिये० | 3 | 32 | 149 |
| 15 | अन्तर्गतप्रार्थनमन्तिकस्थं० | 7 | 2 | 220 |
| 16 | अन्तर्हिते शशिनि सैव कुमुद्वती० | 4 | 3 | 159 |
| 17 | अपयास्यति मे शोकः कथं० | 4 | 23 | 173 |
| 18 | अपराधमिमं ततः सहिष्ये यदि० | 3 | 24 | 145 |
| 19 | अप्यौत्सुक्ये महति दयित० | 3 | 27 | 147 |
| 20 | अभिजनवतो भर्तुः श्लाघ्ये० | 4 | 21 | 172 |
| 21 | अभिमुखे मयि संवृतमीक्षितं० | 2 | 12 | 128 |
| 22 | अभ्यक्तमिव स्नातः शुचिर० | 5 | 12 | 180 |
| 23 | अभ्युन्नता पुरस्तादवगाढा० | 3 | 9 | 136 |

| सं० | चन्द्रशेखरेण निर्दिष्टाः श्लोकाः।। | अङ्कः | क्रमः | पृष्ठांकः |
|---|---|---|---|---|
| 24 | अमी वेदीं परितः क्लृप्तधिष्ण्याः० | 4 | 10 | 166 |
| 25 | अयं स ते तिष्ठति संगमोत्सुको० | 3 | 16 | 141 |
| 26 | अयं स ते श्यामलतामनोहरं० | 3 | 35 | 150 |
| 27 | अयं स यस्मात् प्रणयावधीरणा० | 3 | 17 | 141 |
| 28 | अयमगविवरेभ्यश्चातकैर्नि० | 7 | 7 | 221 |
| 29 | अरिहसि मे चूअङ्कुर दिण्णो० | 6 | 3 | 198 |
| 30 | अर्थो हि कन्या परकीय एव० | 4 | 24 | 174 |
| 31 | अर्धपीतस्तनं मातुरामर्दक्लिष्ट० | 7 | 14 | 224 |
| 32 | अशिशिरतरैरन्तस्तापैर्विवर्ण० | 3 | 15 | 140 |
| 33 | असंशयं क्षत्रपरिग्रहक्षमा० | 1 | 22 | 110 |
| 34 | अस्मात् परं बत यथास्मृति० | 6 | 28 | 214 |
| 35 | अस्मान् साधु विचिन्त्य संयमध० | 4 | 19 | 170 |
| 36 | अस्यास्तुंगमिव स्तनद्वयमिदं० | 6 | 16 | 207 |
| 37 | अहन्यहन्यात्मन एव ताव० | 6 | 32 | 217 |
| 38 | अहिणवमहुलोहभाविओ० | 5 | 8 | 177 |
| 39 | आ जन्मनः शाठ्यमशिक्षितो० | 5 | 28 | 188 |
| 40 | आ परितोषाद् विदुषां न साधु० | 1 | 2 | 97 |
| 41 | आअम्बहरिअवेण्टं ऊससिअं विअ० | 6 | 2 | 197 |
| 42 | आखण्डलसमो भर्ता जयन्त० | 7 | 28 | 233 |
| 43 | आचार इत्यधिकृतेन मया० | 5 | 1 | 175 |
| 44 | आमूलशुद्धसंततिकुलमेतत्० | 6 | 29 | 215 |
| 45 | आलक्ष्यदन्तमुकुलान० | 7 | 17 | 226 |
| 46 | इतः प्रत्यादिष्टा स्वजनमनुगन्तुं० | 6 | 10 | 203 |
| 47 | इदं किलाव्याजमनोहरं वपु० | 1 | 17 | 106 |
| 48 | इदमनन्यपरायणमन्यथा० | 3 | 22 | 144 |
| 49 | इदमप्युपकृतिपक्षे सुरभि मुखं० | 3 | 37 | 152 |
| 50 | इदमुपनतमेवं रूपमक्लिष्ट० | 5 | 20 | 184 |
| 51 | इदमुपहितसूक्ष्मग्रन्थिना० | 1 | 18 | 106 |
| 52 | उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं० | 4 | 17 | 170 |
| 53 | उत्सृज्य कुसुमशयनं नलिनी० | 3 | 26 | 147 |

| सं० | चन्द्रशेखरेण निर्दिष्टाः श्लोकाः।। | अङ्कः | क्रमः | पृष्ठांकः |
|---|---|---|---|---|
| 54 | उदेति पूर्वं कुसुमं ततः फलं० | 7 | 30 | 233 |
| 55 | उन्मितैकभ्रूलतमाननमस्याः० | 3 | 18 | 142 |
| 56 | उपकृत्य हरेस्तस्या भवाल्लंघु० | 7 | 1 | 220 |
| 57 | उपहितस्मृतिरङ्गुलिमुद्रया० | 6 | 9 | 201 |
| 58 | उपोढशब्दा न रथाङ्गनेमयः० | 7 | 10 | 222 |
| 59 | उल्ललइ दब्भकवलं मई० | 4 | 14 | 168 |
| 60 | एकैकमत्र दिवसे दिवसे मदीयं० | 6 | 13 | 205 |
| 61 | एवमाश्रमविरुद्धवृत्तिना० | 7 | 18 | 226 |
| 62 | एष त्वामभिनवकण्ठशोणितार्थी० | 6 | 33 | 217 |
| 63 | एषा कुसुमनिषण्णा तृषिता० | 6 | 22 | 210 |
| 64 | औत्सुक्यमात्रमवसादयति० | 5 | 5 | 176 |
| 65 | कः पौरवे वसुमतीं शासति० | 1 | 25 | 111 |
| 66 | कठिनमपि मृगाक्ष्या वल्कलं० | 1 | 20 | 107 |
| 67 | कथं नु तं कोमलबन्धुरा० | 6 | 14 | 206 |
| 68 | कर्कन्धूनामुपरि तुहिनं रञ्जय० | 4 | 4 | 159 |
| 69 | का कथा बाणसंधाने ज्या० | 3 | 1 | 134 |
| 70 | कामं प्रत्यादिष्टां स्मरामि न० | 5 | 34 | 191 |
| 71 | कामं प्रिया न सुलभा मनस्तु० | 2 | 1 | 121 |
| 72 | कार्या सैकतलीनहंसमिथुना० | 6 | 20 | 209 |
| 73 | किं कृतकार्यद्वेषाद् धर्मं प्रति० | 5 | 19 | 183 |
| 74 | किं तावद् व्रतिनामुपोढतपसां० | 5 | 10 | 179 |
| 75 | किं शीकरैः क्लमविमर्दिभि० | 3 | 25 | 146 |
| 76 | कुतो धर्मक्रियाविघ्नः सतां० | 5 | 15 | 181 |
| 77 | कुमुदान्येव शशाङ्कः सविता० | 5 | 31 | 189 |
| 78 | कुल्याम्भोभिः पवनचपलैः० | 1 | 14 | 103 |
| 79 | कृतं न कर्णार्पितबन्धनं० | 6 | 21 | 209 |
| 80 | कृताः शरव्यं हरिणा तवासुरा० | 6 | 35 | 218 |
| 81 | कृतावमर्शामनुमन्यमानः० | 5 | 21 | 184 |
| 82 | कृत्ययोर्भिन्नदेशत्वाद्० | 2 | 18 | 132 |
| 83 | कृष्णसारे ददच्चक्षुस्त्वयि० | 1 | 6 | 100 |

| सं० | चन्द्रशेखरेण निर्दिष्टाः श्लोकाः।। | अङ्कः | क्रमः | पृष्ठांकः |
|---|---|---|---|---|
| 84 | केयमवगुण्ठनवती नातिपरि० | 5 | 14 | 181 |
| 85 | क्व वयं क्व परोक्षमन्मथो मृग० | 2 | 19 | 133 |
| 86 | क्षणात्प्रबोधमायाति लंघ्यते० | 5 | 2 | 175 |
| 87 | क्षामक्षामकपोलमानन० | 3 | 12 | 138 |
| 88 | क्षौमं केनचिदिन्दुपाण्डु तरुणा० | 4 | 7 | 164 |
| 89 | खणचुम्बिआइँ भमरेहिँ उअह० | 1 | 4 | 98 |
| 90 | गच्छति पुरः शरीरं धावति० | 1 | 34 | 119 |
| 91 | गान्धर्वेण विवाहेन बह्व्यो थ० | 3 | 28 | 148 |
| 92 | गाहन्तां महिषा निपानसलिलं० | 2 | 6 | 125 |
| 93 | ग्रीवाभङ्गाभिरामं मुहु० | 1 | 7 | 100 |
| 94 | चलापाङ्गां दृष्टिं स्पृशसि० | 1 | 24 | 110 |
| 95 | चारुणा स्फुरितेनायमपरिक्षत० | 3 | 36 | 151 |
| 96 | चित्ते निवेश्य परिकल्पित० | 2 | 10 | 127 |
| 97 | चूतानां चिरनिर्गतापि कलिका० | 6 | 4 | 198 |
| 98 | जाने तपसो वीर्यं सा बाला० | 3 | 2 | 134 |
| 99 | ज्वलति चलितेन्धनो ग्निर्विप्रकृत० | 6 | 37 | 219 |
| 100 | णावेक्खिओ गुरुअणो इमीअ० | 5 | 17 | 182 |
| 101 | तदाशु कृतसंधानं प्रतिसंहर० | 1 | 11 | 102 |
| 102 | तदेषा भवतः पत्नी त्यज वैनं० | 5 | 29 | 188 |
| 103 | तपति तनुगात्रि मदनस्त्वाम्० | 3 | 20 | 143 |
| 104 | तव कुसुमशरत्वं शीतरश्मि० | 3 | 4 | 135 |
| 105 | तव भवतु बिडौजाः प्राज्यवृष्टि० | 7 | 34 | 235 |
| 106 | तव सुचरितमङ्गुरीय नूनं० | 6 | 12 | 204 |
| 107 | तवास्मि गीतरागेण हारिणा० | 1 | 5 | 99 |
| 108 | तस्याः पुष्पमयी शरीरलुलिता० | 3 | 39 | 154 |
| 109 | तस्याग्रभागाद् गृहनीलकण्ठै० | 6 | 31 | 216 |
| 110 | तीव्राघातादभिमुखतरुस्कन्ध० | 1 | 33 | 118 |
| 111 | तुज्झ ण आणे हिअअं मम० | 3 | 19 | 142 |
| 112 | तुज्झे ज्जेव पमाणं जाणध० | 5 | 26 | 187 |
| 113 | तुरगखुरहतस्तथा हि रेणुर्विटप० | 1 | 32 | 118 |

| सं० | चन्द्रशेखरेण निर्दिष्टाः श्लोकाः।। | अङ्कः | क्रमः | पृष्ठांकः |
|---|---|---|---|---|
| 114 | त्रिस्रोतसं वहति यो गगनप्रतिष्ठां० | 7 | 6 | 221 |
| 115 | त्वं दूरमपि गच्छन्ती हृदयं० | 3 | 29 | 148 |
| 116 | त्वन्मतिः केवला तावत् प्रतिपाल० | 6 | 38 | 219 |
| 117 | त्वमर्हतां प्राग्रहरः स्मृतो० | 5 | 16 | 182 |
| 118 | दर्भाङ्कुरेण चरणः क्षत० | 2 | 13 | 129 |
| 119 | दर्शनसुखमनुभवतः साक्षादिव० | 6 | 24 | 211 |
| 120 | दिष्ट्या शकुन्तला साध्वी० | 7 | 29 | 233 |
| 121 | दीर्घापाङ्गविसारिनेत्र० | 6 | 15 | 206 |
| 122 | दुःषन्तेनाहितं तेजो दधानां० | 4 | 6 | 162 |
| 123 | धर्म्यास्तपोधनानां प्रतिहतविघ्नाः० | 1 | 12 | 102 |
| 124 | न खलु न खलु बाणः संनिपात्यो० | 1 | 10 | 101 |
| 125 | न तिर्यगवलोकितं भवति चक्षु० | 5 | 24 | 187 |
| 126 | न नमयितुमधिज्यमुत्सहिष्ये० | 2 | 3 | 123 |
| 127 | नियमयसि विमार्गप्रस्थिता० | 5 | 7 | 177 |
| 128 | निराकृतनिमेषाभिर्नेत्रपंक्ति० | 2 | 8 | 126 |
| 129 | नीवाराः शुककोटरार्भकमुख० | 1 | 13 | 103 |
| 130 | नैतच्चित्रं यदयमुदधि० | 2 | 16 | 130 |
| 131 | परिग्रहबहुत्वे पि द्वे प्रतिष्ठे० | 3 | 23 | 144 |
| 132 | पातुं न प्रथमं व्यवस्यति जलं० | 4 | 11 | 166 |
| 133 | पादन्यासं क्षितिधरगुरोर्मूर्ध्नि० | 4 | 5 | 159 |
| 134 | पिपासाक्षामकण्ठेन याचितं० | 3 | 33 | 149 |
| 135 | पुडइणिवत्तन्तरिअं वाहरिओ० | 4 | 18 | 170 |
| 136 | पुत्रस्य ते रणशिरस्ययम्० | 7 | 26 | 232 |
| 137 | पृष्टा जनेन समदुःखसुखेन० | 3 | 13 | 139 |
| 138 | प्रजाः प्रजाः स्वा इव तन्त्रयित्वा० | 5 | 3 | 175 |
| 139 | प्रजागरात् खिलीभूत० | 6 | 25 | 211 |
| 140 | प्रत्यादिष्टविशेषमण्डनविधि० | 6 | 6 | 200 |
| 141 | प्रथमं साराङ्गाक्ष्या प्रियया० | 6 | 7 | 200 |
| 142 | प्रलोभ्यवस्तुप्रणयप्रसारितो० | 7 | 16 | 225 |
| 143 | प्रवर्ततां प्रकृतिहिताय पार्थिवः० | 7 | 35 | 236 |

| सं० | चन्द्रशेखरेण निर्दिष्टाः श्लोकाः।। | अङ्कः | क्रमः | पृष्ठांकः |
|---|---|---|---|---|
| 144 | प्रागेव जरसा कम्पः सविशेषेण० | 6 | 30 | 216 |
| 145 | प्राणानामनिलेन वृत्तिरुचिता० | 7 | 12 | 223 |
| 146 | प्राहुर्द्वादशधा स्थितस्य मुनयो० | 7 | 27 | 232 |
| 147 | बाष्पेन प्रतिषिद्धे पि जयशब्दे० | 7 | 23 | 230 |
| 148 | भव हृदय साभिलाषं संप्रति० | 1 | 28 | 116 |
| 149 | भवनेषु सुधासितेषु पूर्वं क्षिति० | 7 | 20 | 227 |
| 150 | भवन्ति नम्रास्तरवः फलोद्गमैः० | 5 | 13 | 180 |
| 151 | भानुः सकृद्युक्ततुरंग एव० | 5 | 4 | 176 |
| 152 | भूत्वा चिराय सदिगन्तमही० | 4 | 22 | 172 |
| 153 | मणिबन्धनगलितमिदं संक्रान्तो० | 3 | 31 | 149 |
| 154 | मनोरथाय नाशंसे किं बाहो० | 7 | 13 | 224 |
| 155 | मय्येव विस्मरणदारुणचित्तवृत्तौ० | 5 | 25 | 187 |
| 156 | महतस्तेजसो बीजं बालो यं० | 7 | 15 | 225 |
| 157 | महाभागः कामं नरपतिरभिन्न० | 5 | 11 | 180 |
| 158 | मानुषीभ्यः कथं नु स्यादस्य० | 1 | 26 | 115 |
| 159 | मुक्तेषु रश्मिषु निरायतपूर्व० | 1 | 8 | 100 |
| 160 | मुनिसुताप्रणयस्मृतिरोधिना० | 6 | 8 | 201 |
| 161 | मुहुरङ्गुलिसंवृत्ताधरोष्ठं० | 3 | 38 | 153 |
| 162 | मूढः स्यामहमेषा वा वदेन्मिथ्येति० | 5 | 32 | 189 |
| 163 | मेदश्छेदकृशोदरं लघु भवत्यु० | 2 | 5 | 124 |
| 164 | मोहान्मया सुतनु पूर्व० | 7 | 25 | 231 |
| 165 | यतो यतः षट्चरणो भिवर्तते० | 1 | 23 | 110 |
| 166 | यथा गजे साधुसमक्षरूपे० | 7 | 31 | 233 |
| 167 | यदालोके सूक्ष्मं व्रजति सहसा० | 1 | 9 | 101 |
| 168 | यदि यथा वदति क्षितिपस्तथा० | 5 | 30 | 189 |
| 169 | यदुत्तिष्ठति वर्णेभ्यो नृपाणां० | 2 | 14 | 129 |
| 170 | यद्यत्साधु न चित्रे स्मिन्० | 6 | 17 | 207 |
| 171 | ययातेरिव शर्मिष्ठा पत्युर्बहुमता० | 4 | 9 | 166 |
| 172 | यस्य त्वया व्रणविरोहणम्० | 4 | 16 | 169 |
| 173 | या सृष्टिः स्रष्टुराद्या वहति विधिहुतं० | 1 | 1 | 95 |

| सं० | चन्द्रशेखरेण निर्दिष्टाः श्लोकाः।। | अङ्कः | क्रमः | पृष्ठांकः |
|---|---|---|---|---|
| 174 | यात्येकतो स्तशिखरं पतिरोषधी० | 4 | 2 | 159 |
| 175 | यास्यत्यद्य शकुन्तलेति हृदयं० | 4 | 8 | 165 |
| 176 | येन येन वियुज्यन्ते प्रजाः० | 6 | 26 | 213 |
| 177 | यो हनिष्यति वध्यं त्वां रक्ष्यं० | 6 | 34 | 218 |
| 178 | रथेनानुद्धातस्तिमितगतिना० | 7 | 33 | 234 |
| 179 | रम्यं द्वेष्टि यथा पुरा प्रकृतिभिः० | 6 | 5 | 199 |
| 180 | रम्याणि वीक्ष्य मधुरांश्च० | 5 | 9 | 178 |
| 181 | रम्यान्तरः कमलिनीहरितैः सरोभि० | 4 | 13 | 167 |
| 182 | रहः प्रत्यासत्तिं यदि सुवदना० | 3 | 40 | 154 |
| 183 | ललितोप्सरोभवं किल मुनेरपत्यं० | 2 | 9 | 127 |
| 184 | वल्मीकार्धनिमग्नमूर्तिरुरग्० | 7 | 11 | 223 |
| 185 | वसने परिधूसरे वसाना नियमक्षाम० | 7 | 21 | 229 |
| 186 | वाचं न मिश्रयति यद्यपि० | 1 | 31 | 118 |
| 187 | विचिन्तयन्ती यम् अनन्यमानसा० | 4 | 1 | 156 |
| 188 | विच्छित्तिशेषैः सुरसुन्दरीणां | 7 | 5 | 221 |
| 189 | वृथैव संकल्पशतैरजस्रमनङ्ग० | 3 | 6 | 135 |
| 190 | वैखानसं किमनया व्रतमाप्र० | 1 | 27 | 115 |
| 191 | व्यपदेशमाविलयितुं समीहसे० | 5 | 22 | 185 |
| 192 | शक्योरविन्दसुरभिः कणवाही० | 3 | 8 | 136 |
| 193 | शमप्रधानेषु तपोवनेषु गूढं० | 2 | 7 | 125 |
| 194 | शशिकरविशदान्यास्तथा० | 3 | 11 | 137 |
| 195 | शहये किल ये वि णिन्दिदे० | 6 | 1 | 193 |
| 196 | शान्तमिदमाश्रमपदं स्फुरति० | 1 | 15 | 104 |
| 197 | शापादसि प्रतिहता स्मृतिलोप० | 7 | 32 | 234 |
| 198 | शुद्धान्तदुर्लभमिदं वपुराश्रम० | 1 | 16 | 105 |
| 199 | शुश्रूषस्व गुरून् कुरु प्रियसखी० | 4 | 20 | 171 |
| 200 | शैलानामवरोहतीव शिखराद्० | 7 | 8 | 222 |
| 201 | संकल्पितं प्रथममेव मया० | 4 | 15 | 168 |
| 202 | संदष्टकुसुमशयनान्याशु० | 3 | 21 | 143 |
| 203 | संमीलन्ति न तावद् बन्धनकोशा० | 3 | 7 | 136 |

| सं० | चन्द्रशेखरेण निर्दिष्टाः श्लोकाः।। | अङ्कः | क्रमः | पृष्ठांकः |
|---|---|---|---|---|
| 204 | संरोपिते प्यात्मनि धर्मपत्नी० | 6 | 27 | 214 |
| 205 | सख्युस्ते स किल शतक्रतोरवध्य० | 6 | 36 | 218 |
| 206 | सतीमपि ज्ञातिकुलैकसंश्रयां० | 5 | 18 | 183 |
| 207 | सरसिजमनुविद्धं शैवलेनापि० | 1 | 19 | 107 |
| 208 | सा निन्दन्ती स्वानि भाग्यानि० | 5 | 33 | 190 |
| 209 | साक्षात् प्रियामुपगतामपहाय० | 6 | 18 | 207 |
| 210 | सायंतने सवनकर्मणि संप्रवृत्ते० | 3 | 41 | 154 |
| 211 | सिध्यन्ति कर्मसु महत्स्वपि० | 7 | 4 | 220 |
| 212 | सुखपरस्य हरेरुभयैः कृतं० | 7 | 3 | 220 |
| 213 | सुतनु हृदयात् प्रत्यादेशव्यलीक० | 7 | 24 | 230 |
| 214 | सुभगसलिलावगाहाः पाटलिसंसर्ग० | 1 | 3 | 97 |
| 215 | स्तनन्यस्तोशीरं प्रशिथिल० | 3 | 10 | 137 |
| 216 | स्त्रीणामशिक्षितपटुत्वम्० | 5 | 23 | 187 |
| 217 | स्निग्धं वीक्षितमन्यतो पि नयने० | 2 | 2 | 121 |
| 218 | स्मर एव तापहेतुर्निर्वापयिता० | 3 | 14 | 139 |
| 219 | स्मृतिभिन्नमोहतमसो दिष्ट्या० | 7 | 22 | 230 |
| 220 | स्रस्तांसावतिमात्रलोहिततलौ० | 1 | 30 | 117 |
| 221 | स्वप्नो नु माया नु मतिभ्रमो० | 6 | 11 | 204 |
| 222 | स्वसुखनिरभिलाषः खिद्यसे० | 5 | 6 | 176 |
| 223 | स्वायंभुवान्मरीचेर्यः प्रबभूव० | 7 | 9 | 222 |
| 224 | स्विन्नांगुलीनिवेशाद् रेखा० | 6 | 19 | 208 |
| 225 | हरकोपाग्निदग्धस्य दैवेनामृत० | 3 | 34 | 150 |

# परिशिष्ट–2

**( सन्दर्भदीपिका में निर्दिष्ट ग्रन्थ एवं ग्रन्थकारों की अ-कारादि क्रम से नामावली )**

1. अद्भुतसागर:–(1)–15
2. अनन्तार्णव:–(2)–3
3. अमर:–(1)–4, 7, 8, 12, (2)–2, 8, 12, (3)–6, 15, 25, (4)–9, (5)–9, 14, 19, 28, (7)–11,
4. अमरटीका–(6)–30,
5. आगम:–(7)–35,
6. कविकण्ठहार:–(1)–25,
7. कविकल्पलतिका–(3)–5,
8. कालिदास:–(1)–1,
9. काव्यमीमांसक:–(1)–6,
10. कोष:–(1)–16, 20, (2)–10, (3)–24, (5)–21,
11. गुरव:–(1)–10,
12. चतुर्भुजमिश्र:–(1)–1,
13. तीरभुक्तीयग्रन्थ:–(1)–20,
14. त्रिकाण्डशेष:–(4)–6,
15. त्रिलोचनमिश्र:–(1)–1, 23, 24, (3)–5, (6)–33,
16. दर्पणकार: (विश्वनाथ:)–(3)–38, (5)–4,
17. दाक्षिणात्यग्रन्थ:–(1)–20, (6)–16,
18. दुर्गटीका–(2)–15,
19. देशी–(4)–18, (5)–19,
20. नव्या:–(1)–1, 14,
21. नाट्यलोचन:–(1)–23, 24, (3)–5, (6)–33,
22. पाणिनिसूत्रम्–(1)–15, (2)–1 से पूर्व,
23. पुराणपुस्तकम्–(5)–24,

—•—

# सन्दर्भ ग्रन्थ-सूचिः


A Reconstruction of the Abhijnanaśakuntalam, Ed. Prof. Dileep Kumar Kanjilal, Sanskrit College, Calcutta, 1980

Abhijnanaśakuntala, (The purer Devanagari Text), Ed. Prof. P.N. Patankar, Pub. Shiralkar&Co., Poona, 1902

Abhijnana Śakuntalam, Ed. Sharad Ranjan Rai, Calcutta, 1908

Abhijnana Śakuntalam, Ed. S.K. Belvalkar, Pub. Sahity Akademi, New Delhi, 1965

Die Kac'mirer Śakuntala–Handschrift, Ed. Karl Burkhard, Published in SITZUNGSBERICHTE Der Philosophisch & Historiischen Classe, Wein, Germany, 1884

Kalidāsa's Śakuntala, Ed. Richard Pischel, Harvard University Press, Cambridge, 1876, (Second Edition in 1922.

Patankar, P.N. (1902), TheAbhijnanaśakuntala, Poona: Shiralkar & Co, Boodhwar Peith, Poona.

Pischel, R. (1876] (Seond edition & 1922), Kalidāsa's Śakuntala, an Ancient Hindu Drama, Cambridge: Harvard University Press.

Sacuntala Annulo Recognita, (Textum Recensionis Devanagaricae Recognovit)] Ed. Carolus Burkhard, Vratislaviae, Impensis J.U. Kerni, Bonnensis, 1872

The Text of Śakuntala, B.K. Thakore, Pub. D.B. Taraporewala sons & Co., Bombay, 1922

अभिज्ञानशकुन्तलम्, (टीकाकार–शङ्कर–नरहरि), सं. श्री रमानाथ झा, प्रका. मिथिला विद्यापीठ, दरभङ्गा, 1957, प्रथम संस्करण।

अभिज्ञानशाकुन्तलम्, (टीकाकार–राघव भट्ट), सं.नारायण राम, प्रका. राष्ट्रिय संस्कृत संस्थान, नई दिल्ली, 2006, द्वितीय संस्करण।

अभिज्ञानशाकुन्तलम्, (टीकाकार–काटयवेम), सं. चेलमचेर्ल रंगाचार्य, प्रका. आन्ध्रप्रदेश साहित्य अकादेमी, हैदराबाद, 1982, प्रथम सं.

अभिज्ञानशकुन्तलम्, (टीकाकार–नवकिशोरकर शास्त्री, अनु. रामतेज पाण्डेय, प्रका. चौखम्बा संस्कृत सीरीझ, वाराणसी, 1960, चतुर्थ सं.

अभिज्ञानशाकुन्तलम्, (टीकाकार–घनश्याम), सं. पूनम पंकज रावळ, प्रका. सरस्वती पुस्तक भण्डार, अहमदावाद, 1997, प्रथम संस्करण।

अभिज्ञानशाकुन्तलम्, (टीकाकार–श्रीनिवासाचार्य, सं. गणेश काशीनाथ काळे, प्रका. अज्ञात, मद्रास, 1916, प्रथम संस्करण

अभिज्ञानशाकुन्तलम्, (टीकाकार–अभिराम), सं. जे.के. बालसुब्रह्मण्यम्, प्रका. श्रीवाणीविलास मुद्रणालय, श्रीरङ्गम्, 1917, प्रथम संस्करण।

बेलवालकर, ए. (1965), अभिज्ञानशाकुन्तलम्, दिल्ली: साहित्य अकादेमी.

बेलवालकर, एस.के. (1962 (वि.सं. 2019), निसर्ग कन्या शकुन्तला (शोध- आलेख). In अ.-श. चतुर्वेदी, कालिदास ग्रन्थावली, (pp. 7×60-), अलीगढ: भारत प्रकाशन मन्दिर.

कालिदास–अपनी बात, (भारतीय दृष्टि)। ले. पं.श्री रेवाप्रसाद द्विवेदी, कालिदास संस्थान, वाराणसी, 2004, प्रथम संस्करण।

कालिदास–ग्रन्थावली, सं. पं. श्री रेवाप्रसाद द्विवेदी, प्रका. कालिदास संस्थान, वाराणसी, 1986, द्वितीय संस्करण।

कालिदास–ग्रन्थावली, (भाग–1, 2), अनु. पं. श्री रेवाप्रसाद द्विवेदी, सं. मिथिलाप्रसाद त्रिपाठी,प्रका. कालिदास संस्कृत अकादेमी, उज्जैन, 2009

काञ्चीलाल, द. (1980), अभिज्ञानशकुन्तलम्, कोलकाता: संस्कृत कॉलेज, 1 बंकीम चेटर्जी स्ट्रीट, कोलकाता–700073.

काञ्चीलाल, द. (1980), अभिज्ञानशकुन्तलम्, कोलकाता: संस्कृत कॉलेज.

काटयवेम, (1982), अभिज्ञानशाकुन्तलम्, हैदराबाद: आन्ध्रप्रदेश संस्कृत अकादेमी.

नाट्यशास्त्र, सं. बलदेव उपाध्याय, प्रका. चौखम्बा ओरिएन्टालिया, वाराणसी, 1980, चतुर्थ संस्करण।

नवकिशोरकर, (1960), अभिज्ञानशाकुन्तलम्, वाराणसी: चौखम्बा संस्कृत सिरीझ.

प्राकृत–प्रकाश, सं. अनु. मथुराप्रसाद दीक्षित, प्रका. चौखम्बा संस्कृत सीरीझ, वाराणसी, 1959, चतुर्थ संस्करण।

महाभारत–आदिपर्वन्, सं. वी.एस. सुकथणकर, प्रक. भाण्डारकर ओरिएन्टल रिसर्च इन्स्टीट्युट, पूर्णे, 1933, प्रथम संस्करण।

रमानाथ झा. (1957). अभिज्ञानशकुन्तलम् (शंकर–नरहरिकृतयोष्टीकयोः समेतम्), दरभंगारू मिथिला विद्यापीठ.

राघवभट्ट. (2006), अभिज्ञानशाकुन्तलम्. दिल्ली: राष्ट्रिय संस्कृत संस्थान.

राय, शरद रञ्जन. (1908), अभिज्ञानशाकुन्तलम्, कोलकाता.

—•—